# संस्कृतविहारः

## प्रथमो भागः





पब्लिशिंग हाउस, मुंबई ४

# संस्कृतविहारः

## प्रथमो भागः

V. D. GOKHALE, M. A., B. T.
R. M. MARATHE, M. A., LL.B., B T.

FOREWORD
Principal K. S. VAKIL.
M. ED., F. R. G. S., M. R. S. T., I. E. S. (RETIRED).
S. M. T. Teachers College, Kolhapur.

SWASTIK PUBLISHING HOUSE
6 KELEWADI, BOMBAY 4.

Price 0-8-0

# FOREWORD

Messrs Gokhale and Marathe deserve to be congratulated on their present adventure which seeks to make the teaching of Sanskrit in our Secondary Schools *really* interesting. Those acquainted with the result of the current methods will doubtless agree that they have failed to achieve this aim. I have, therefore, no hesitation in recommending that the plan of work indicated by Messrs Gokhale and Marathe after a fairly long trial with it be adopted by Schools and teachers concerned in the reform of Sanskrit-teaching. The plan steers clear of a good many of the difficulties and complexities of Sanskrit-teaching and shows a straight-forward way of dealing with it.

It would be advisable for Schools which have more than one class in each High School Standard to try the plan indicated in this book in one class and the current plan in the other or others and note the progress of the pupils as well as their attitude towards the subject in each and determine for themselves the relative value and usefulness of each plan.

Teachers College
Kolhapur, 10-11-38.

**K. S. Vakil**



# PREFACE

This book aims at introducing the beginner to the intricacies of Sanskrit in a pleasant and unobtrusive manner. Faith in the new method is its basis. It is assumed that literature is a better approach than grammar even to a classical langauge, that a language can be learnt only by use, that only one difficulty should be presented at a time. Accordingly the text consists mostly of stories from the Hitopadesha cerefully adapted and graded with reference to both vocabulary and grammar.

The vocabulary ( 1400 words ) includes masculine nouns ending in अ, इ, उ, feminine nouns ending in आ, ई and neuter nouns ending in अ. Most of the pronouns have been introduced, but only adjectives ending in अ have been admitted. The guiding considerations in selecting declinables have been declensional ease, affinity to the vernaculars and utility in expression so as to present the reading material within a limited range of vocabulary without stultifying the language. Hence indeclinables have been freely introduced.

Among roots those of the first, fourth, sixth and tenth conjugations have been preferred, but a few very common roots of other conjugations have also been included. Both the active and the passive forms of the Present and the Imperfect tenses and the Imperative mood have been introduced, but only the active form of the Simple Future, for the obvious reason that the passive form of this tense is rarely met with in literature. Past passive participles have been admitted with special emphasis on the fact that they are largely used in preference to the passive and even the active form of the Imperfect tense. Present participles have been excluded because of the difficulty in declension. Gerunds and infinitives have however been introduced.

The presentation of grammar is throughout inductive and practical. Illustrations have been preferred to rules, the little explanation necessary being relegated to the Teachers' Handbook. The purpose is to emphasize the fact that it is only by

intimate familiarity with the various forms that pupils will learn to recognize them and not by committing abstract rules to memory. A reference to the eighteenth lesson which introduces the passive form of the present tense will show that no pains have been spared to make the presentation clear and self-illuminating.

Another assumption in the composition of this book is that the aim of Sanskrit teaching is not to make grammarians, orators or authors but simply to arouse living interest in the language. As the repository of sacred lore and of a world famous literature Sanskrit should be a solace and an inspiration to our educated youth. Instead it remains a sealed book, most students being frightened away by current methods of teaching. Sanskrit literature, both sacred and profane, can, however, be read and appreciated without great difficulty. The present series is so designed as to lead the learner gradually into an intelligent regard for Sanskrit literature.

Hence it is felt that for the average student there should be little place for the formal teaching of grammar. The skill to be aimed at is the ability to read and understand. Exercises in original composition or in translation into Sanskrit are superfluous and wasteful. Sanskrit literature itself must be so adapted and graded that acquaintance with it will develop into the power of tackling original material with only an occasional reference to the dictionary or the annotations. Accordingly even this first book includes selections from Kalidas, Bhas, the Ramayan and the Kadambari. And its companion volume, intended for rapid reading, is Madhyamavyayoga, a complete play of Bhas, carefully adapted for the purpose.

The two great difficulties in the study of Sanskrit literature are Sandhis and Compounds, Only one compound viz. the Shasthitatpurusha has been touched in this book. But a number of Sandhis have been introduced in a novel and, it is hoped, effective manner. The method consists in bringing in only one

or two Sandhis at a time and so familiarizing the student with it or them by repeated use that recognition becomes automatic.

Though emphasis is thus laid on reading skill, it does not preclude oral work. Linguistic material can be mastered only by constant acquaintance. Opportunities must be provided to hear and read, and to reproduce what is heard and read. Repetition is necessary and to be effective it must be alert and interesting. Conversational work provides repetition without boredom, and is of the utmost value in teaching any language. Detailed suggestions as to the method of oral work will be found in the Teachers' Handbook.

Simple written exercises, which do not involve original composition, are also very useful in fixing language material and in checking students' lapses of understanding. The exercises in this book are planned to provide specific practice in special skills, such as the dissolution of Sandhis and compounds and the use of peculiar phrases and constructions. The exercises involving the construction and completion of sentences have been so framed that students will not be able to do them merely by reference to the body of the text. Other exercises intended to ensure repetition will be found in the Handbook.

The scheme of grammar outlined above is very much in keeping with that of Dr. Bhandarkar's First Book. Thus those who insist on the formal teaching of grammar will be able to use this as a reading book in conjunction with Dr. Bhandarkar's Book. But such a study of grammar is unneccssary, and the best advantage will be derived by using this book alone on the line laid down in the Handbook.

We are very grateful to our Guru Principal K. S. Vakil for kindly sparing time to go through the book and favouring us with a foreword. Gurubandhu K. J. Dixit of Sangli has also obliged us by making invaluable suggestions.

**V. D. G.**
**R. M. M.**

## अनुक्रमणिका

# प्रथमः भागः

## Singular प्रथमः पाठः

अहं उत्तिष्ठामि । अहं उपविशामि ।

बाल, उत्तिष्ठ । बाल, उपविश ।

बाल, वद । अहं उत्तिष्ठामि । अहं उपविशामि ।

अहं किं करोमि । अहं उत्तिष्ठामि । अहं उपविशामि ।

किं करोषि त्वम् । अहं उत्तिष्ठामि । अहं उपविशामि ।

बाल, वद । अहं किं करोमि ।

त्वं उत्तिष्ठसि । त्वं उपविशसि ।

किं करोति बालः । बालः उत्तिष्ठति । बालः उपविशति ।

सः किं करोति । सः उत्तिष्ठति । सः उपविशति ।

---

## Plural द्वितीयः पाठः

Plural

बालाः, उत्तिष्ठत । बालाः, उपविशत । Plural

बालाः, वदत । वयं उत्तिष्ठामः । वयं उपविशामः ।

यूयं किं कुरुथ । वयं उत्तिष्ठामः । वयं उपविशामः ।

बालाः, वदत । वयं किं कुर्मः ।

यूयं उत्तिष्ठथ । यूयं उपविशथ ।

बालाः किं कुर्वन्ति । बालाः उत्तिष्ठन्ति । बालाः उपविशन्ति ।
ते किं कुर्वन्ति । ते उत्तिष्ठन्ति । ते उपविशन्ति ।

---

## तृतीयः पाठः

एषः बालः । एषः अन्यः बालः । एतौ बालौ ।
बालौ, उतिष्ठतम् । बालौ, उपविशतम् ।
बालौ, वदतम् । आवां उत्तिष्ठावः । आवां उपविशावः ।
युवां किं कुरुथः । आवां उत्तिष्ठावः । आवां उपविशावः ।
बालौ, वदतम् । आवां किं कुर्वः ।
युवां उत्तिष्ठथः । युवां उपविशथः ।
बालौ किं कुरुतः । बालौ उत्तिष्ठतः । बालौ उपविशतः ।
तौ किं कुरुतः । तौ उत्तिष्ठतः । तौ उपविशतः ।

---

## चतुर्थः पाठः

अहं उत्तिष्ठामि । आवां उत्तिष्ठावः । वयं उत्तिष्ठामः ।
त्वं उत्तिष्ठसि । युवां उत्तिष्ठथः । यूयं उत्तिष्ठथ ।
सः उत्तिष्ठति । तौ उत्तिष्ठतः । ते उत्तिष्ठन्ति ।
अहं उपविशामि । आवां उपविशावः । वयं उपविशामः ।
त्वं उपविशसि । युवां उपविशथः । यूयं उपाविशथ ।
सः उपविशति । तौ उपविशतः । ते उपविशन्ति ।
अहं किं करोमि । आवां किं कुर्वः । वयं किं कुर्मः ।
त्वं किं करोषि । युवां किं कुरुथः । यूयं किं कुरुथ ।

सः किं करोति । तौ किं कुरुतः । ते किं कुर्वन्ति ।
बाल, उत्तिष्ठ । बालौ, उत्तिष्ठतम् । बालाः, उत्तिष्ठत ।
बाल, उपविश । बालौ, उपविशतम् । बालाः, उपविशत ।
बाल, वद । बालौ, वदतम् । बालाः, वदत ।

---

## पञ्चमः पाठः

एषः मम हस्तः । एषः मम अन्यः हस्तः । एतौ मम हस्तौ ।
कति हस्ताः मम । मम द्वौ हस्तौ ।
अहं हस्तौ दर्शयामि । एतौ मम हस्तौ ।
बाल, कति हस्ताः तव । मम द्वौ हस्तौ ।
बाल, कति हस्ताः तस्य । तस्य द्वौ हस्तौ ।
बाल, कति हस्ताः मम । तव द्वौ हस्तौ ।
बाल, हस्तौ दर्शय । बालौ, हस्तौ दर्शयतम् । बालाः, हस्तौ दर्शयत ।
अहं हस्तौ दर्शयामि । त्वं हस्तौ दर्शयसि । सः हस्तौ दर्शयति ।
वयं हस्तौ दर्शयामः । यूयं हस्तौ दर्शयथ । ते हस्तौ दर्शयन्ति ।
आवां हस्तौ दर्शयावः । युवां हस्तौ दर्शयथः । तौ हस्तौ दर्शयतः ।
अहं हस्ताभ्यां नमामि । किं करोमि हस्ताभ्याम् ।
अहं हस्ताभ्यां नमामि ।
बाल, हस्ताभ्यां नम । बालौ, हस्ताभ्यां नमतम् ।
बालाः, हस्ताभ्यां नमत ।
अहं हस्ताभ्यां नमामि । त्वं हस्ताभ्यां नमसि । सः हस्ताभ्यां नमति ।
वयं हस्ताभ्यां नमामः । यूयं हस्ताभ्यां नमथ । ते हस्ताभ्यां नमन्ति ।

आवां हस्ताभ्यां नमावः । युवां हस्ताभ्यां नमथः । तौ हस्ताभ्यां नमतः ।

एषः मम पादः । एषः मम अन्यः पादः । एतौ मम पादौ ॥

कति पादाः तव । मम द्वौ पादौ । कति पादाः तस्य ।

तस्य द्वौ पादौ । कति पादाः मम । तव द्वौ पादौ ।

अहं पादाभ्यां चरामि । त्वं पादाभ्यां चरसि । सः पादाभ्यां चरति ।

वयं पादाभ्यां चरामः । यूयं पादाभ्यां चरथ । ते पादाभ्यां चरन्ति ।

आवां पादाभ्यां चरावः । युवां पादाभ्यां चरथः । तौ पादाभ्यां चरतः ।

---

## षष्ठः पाठः

एषः मम कर्णः । एषः मम अन्यः कर्णः । एतौ मम कर्णौ ।

कति कर्णाः तव । मम द्वौ कर्णौ ।

कति कर्णाः तस्य । तस्य द्वौ कर्णौ ।

कति कर्णाः मम । तव द्वौ कर्णौ ।

अहं कर्णाभ्यां शृणोमि । त्वं कर्णाभ्यां शृणोषि । सः कर्णाभ्यां शृणोति ।

वयं कर्णाभ्यां शृणुमः । यूयं कर्णाभ्यां शृणुथ । ते कर्णाभ्यां शृण्वन्ति ।

आवां कर्णाभ्यां शृणुवः । युवां कर्णाभ्यां शृणुथः । तौ कर्णाभ्यां शृणुतः ।

एतत् मम नयनम् । एतत् मम अन्यत् नयनम् । एते मम द्वे नयने ।

कति नयनानि तव । मम द्वे नयने

कति नयनानि तस्य । तस्य द्वे नयने ।
कति नयनानि मम । तव द्वे नयने ।
अहं नयनाभ्यां पश्यामि । त्वं नयनाभ्यां पश्यसि ।
सः नयनाभ्यां पश्यति ।
वयं नयनाभ्यां पश्यामः । यूयं नयनाभ्यां पश्यथ ।
ते नयनाभ्यां पश्यन्ति ।
आवां नयनाभ्यां पश्यावः । युवां नयनाभ्यां पश्यथः ।
तौ नयनाभ्यां पश्यतः ।
एतत् मम मुखम् । मम एकं एव मुखम् ।
कति मुखानि तव । मम एकं मुखम् ।
कति मुखानि तस्य । तस्य एकं मुखम् ।
कति मुखानि मम । तव एकं मुखम् ।
अहं मुखेन वदामि । त्वं मुखेन वदसि । सः मुखेन वदति ।
वयं मुखेन वदामः । यूयं मुखेन वदथ । ते मुखेन वदन्ति ।
आवां मुखेन वदावः । युवां मुखेन वदथः । तौ मुखेन वद तः ।

---

## सप्तमः पाठः

एतत् द्वारम् । अहं द्वारं आवृणोमि । अहं द्वारं उद्घाटयामि ।
बाल, अत्र आगच्छ । द्वारं आवृणु । द्वारं उद्घाटय ।
त्वं द्वारं आवृणोषि । त्वं द्वारं उद्घाटयसि ।
सः द्वारं आवृणोति । सः द्वारं उद्घाटयति ।
एतत् वातायनम् । अहं वातायनं आवृणोमि । अहं वातायनं उद्घाटयामि ।

बाल, अत्र आगच्छ। वातायनं आवृणु। वातायनं उद्घाटय।
त्वं वातायनं आवृणोषि। त्वं वातायनं उद्घाटयसि।
सः वातायनं आवृणोति। सः वातायनं उद्घाटयति।
एषः फलकः। अहं फलके लिखामि।
बाल, अत्र आगच्छ। फलके लिख।
त्वं फलके लिखसि। सः फलके लिखति।
एतत् पत्रम्। त्वं पत्रे लिखसि। सः पत्रे लिखति।
बालाः पत्रेषु लिखन्ति।
एतत् मम पुस्तकम्। तत् तव पुस्तकम्।
अहं पुस्तकं वाचयामि। त्वं पुस्तकं वाचयसि।
सः पुस्तकं वाचयति। बालाः पुस्तकं वाचयन्ति।

---

## अष्टमः पाठः

रामः प्रातः शयनात् उत्तिष्ठति। सः देवं नमति।
पाठान् च पठति। सः प्रत्यहं विद्यालयं गच्छति।
आचार्यः रामे तुष्यति तं शंसति च। रामः सायं विद्यालयात् गृहं गच्छति क्रीडति च।

गोविन्दः प्रातः शयनात् न उत्तिष्ठति। सः देवं न नमति।
पाठान् च न पठति। सः प्रत्यहं विद्यालयं न गच्छति।
आचार्यः गोविन्दाय कुप्यति तं च निन्दति।
सुवृत्ताः बालाः प्रातः शयनात् उत्तिष्ठन्ति। ते देवं नमन्ति।
पाठान् च पठन्ति। ते प्रत्यहं विद्यालयं गच्छन्ति। तेषु
आचार्यः तुष्यति तान् शंसति च। ते सायं विद्यालयात् गृहं

गच्छन्ति क्रीडन्ति च। दुर्वृत्ताः बालाः प्रातः शयनात् न उत्तिष्ठन्ति। ते देवं न नमन्ति। पाठान् च न पठन्ति। आचार्यः तेभ्यः कुप्यति तान् निन्दति च।

सन्धिविवरणम्

आचार्यः रामे = आचार्यो रामे
आचार्यः गोविन्दाय = आचार्यो गोविन्दाय

---

# नवमः पाठः

## मूर्खः काकः



एकदा एको हंसः एकं काकं पश्यति। हंसस्य वर्णः शुभ्रः अस्ति। काकस्य वर्णः कृष्णः अस्ति। हंसः काकं वदति। अहं शुभ्रः अस्मि। त्वं तु कृष्णः असि। तदा मूर्खः काकः चिन्तयति। अहं अपि शुभ्रो भवामि। सः तडागं गच्छति

शरीरं च जलेन क्षालयति। तथापि सः शुभ्रो न भवति। ततः सः शरीरं पाषाणेन घर्षति। तथापि सः शुभ्रो न भवति। घर्षणेन तस्य प्रभूतं दुःखं केवलं भवति।

### सन्धिविवरणम्

शुभ्रः अस्ति = शुभ्रोऽस्ति

कृष्णः अस्ति = कृष्णोऽस्ति

### स्वाध्यायः

वियुज्य पदानि लिखत :—

एको हंसः। शुभ्रो भवामि।

वाक्यपूरणं कुरुत :—

फलकस्य वर्णः..........अस्ति।

चन्द्रस्य प्रकाशः .......अस्ति।

रामः प्रातः मुखं..........।

---

## दशमः पाठः

### वर्तमानकालः

| | | | | |
|---|---|---|---|---|
| अहं | वदामि | कुप्यामि | लिखामि | चिन्तयामि |
| आवां | वदावः | कुप्यावः | लिखावः | चिन्तयावः |
| वयं | वदामः | कुप्यामः | लिखामः | चिन्तयामः |
| त्वं | वदसि | कुप्यासि | लिखासि | चिन्तयासि |
| युवां | वदथः | कुप्यथः | लिखथः | चिन्तयथः |
| यूयं | वदथ | कुप्यथ | लिखथ | चिन्तयथ |
| सः | वदति | कुप्यति | लिखति | चिन्तयति |

| | | | | |
|---|---|---|---|---|
| तौ | वदतः | कुप्यतः | लिखतः | चिन्तयतः |
| ते | वदन्ति | कुप्यन्ति | लिखन्ति | चिन्तयन्ति |

| धातुः | गणः | विकरणम् |
|---|---|---|
| वद् | १ | अ |
| कुप् | ४ | य |
| लिख् | ६ | अ |
| चिन्त् | १० | अय |
| भू ( भवति ) | १ | |
| घृष् ( घर्षति ) | १ | |
| क्षल् ( क्षालयति ) | १० | |

| तृतीयपुरुषस्य एकवचनम् | धातुः | गणः |
|---|---|---|
| उत्तिष्ठति | उद्+स्था | १ |
| नमति | नम् | १ |
| चरति | चर् | १ |
| पश्यति | दृश् | १ |
| पठति | पठ् | १ |
| गच्छति | गम् | १ |
| तुष्यति | तुष् | ४ |
| शृणोति | श्रु | ५ |
| आवृणोति | आ+वृ | ५ |
| उपविशति | उप+विश् | ६ |
| शंसति | शंस् | ६ |
| करोति | कृ | ८ |

अस् २

| | | |
|---|---|---|
| अस्मि | स्वः | स्मः |
| असि | स्थः | स्थ |
| अस्ति | स्तः | सन्ति |

# एकादशः पाठः

## अधीरः पुत्रः

अस्ति श्रीनगरे नारायणो नाम ब्राह्मणः । सः स्नानाय तडागं गच्छति । तत्र च उत्तरीयाणि तीरे पाषाणे निक्षिपति । अनन्तरं सः जलं प्रविशति । तदा एव नारायणस्य अधीरः पुत्रोऽन्यस्मात् नगरात् आगच्छति । जनकस्य उत्तरीयाणि पाषाणे पश्यति । सः चिन्तयति । कथं एतानि वस्त्राणि अत्र भवन्ति । सः वस्त्राणि गृहं नयति । अनन्तरं नारायणो जलात् बहिः आगच्छति । परं तत्र वस्त्राणि न पश्यति । सः चिन्तयति । कथं मम वस्त्राणि अत्र न भवन्ति । सः अनन्तरं गृहं गच्छति । पुत्रं च निन्दति ।

### सन्धिविवरणम्

सः स्नानाय = स स्नानाय

सः वस्त्राणि = स वस्त्राणि

सः चिन्तयति = स चिन्तयति

सः अनन्तरं = सोऽनन्तरम्

### स्वाध्यायः

**वियुज्य पदानि लिखत :—**

नारायणो नाम । पुत्रोऽन्यस्मात् ।

**वाक्यपूरणं कुरुत :—**

अहं स्नानाय तडागं ———— ।

त्वं पुस्तकानि गृहं ———— ।

दुर्वृत्तः बालः सुवृत्तं बालं ———— ।




# द्वादशः पाठः

## पण्डितः चटकः

वर्षाकाले पर्जन्यस्य वर्षणं भवति। तदा चटको गृहे सुखेन वसति। मर्कटस्य तु गृहं न भवति। वर्षणात् च तस्य प्रभूतं दुःखं भवति। चटको मर्कटं दुःखितं पश्यति। चिन्तयति च। मूर्खः खलु मर्कटो यो वृथा दुःखं अनुभवति। अनन्तरं स मर्कटं वदति। रे मर्कट, तव हस्तौ पादौ च भवतः। तद् गृहं किं न करोषि। वृथा च किं दुःखं अनुभवसि। मर्कटो वदति। रे पण्डित, अलं उपदेशेन। त्वं गृहे सुखेन वस। गृहं न इच्छामि। चटको वदति। मूर्खः खलु त्वम्। मर्कटः तस्य वचनं शृणोति। कोपेन च तस्य गृहं नाशयति।

### सन्धिविवरणम्

दुःखम् + अनुभवति = दुखमनुभवति

अलं + उपदेशेन = अलमुपदेशेन

न + इच्छामि = नेच्छामि

## स्वाध्यायः

**वियुज्य पदानि लिखत :—**

चटको गृहे । स मर्कटम् ।

**वाक्यपूरणं कुरुत :—**

काकः ______________________ दुःखितः भवति ।

कोपेन नारायणः पुत्रं ______________________ ।

काकः शुभ्रः न भवति । सः ________ दुःखं अनुभवति ।

काकः शुभ्रं वर्णं ______________________ ।

हे काक, अलम् ______________________ ।

---

# त्रयोदशः पाठः

## अकारान्त पुल्लिङ्गः "हंस" शब्दः

| विभक्तिः | ए. व. | द्वि व. | ब. व. |
|---|---|---|---|
| प्रथमा | हंसः | हंसौ | हंसाः |
| द्वितीया | हंसम् | हंसौ | हंसान् |
| तृतीया | हंसेन | हंसाभ्याम् | हंसैः |
| चतुर्थी | हंसाय | हंसाभ्याम् | हंसेभ्यः |
| पञ्चमी | हंसात् | हंसाभ्याम् | हंसेभ्यः |
| षष्ठी | हंसस्य | हंसयोः | हंसानाम् |
| सप्तमी | हंसे | हंसयोः | हंसेषु |
| सम्बोधनम् | हंस | हंसौ | हंसाः |

### अकारान्त नपुंसकलिङ्गः 'दुःख' शब्दः

| विभक्तिः | ए. व. | द्वि व. | ब. व. |
|---|---|---|---|
| प्रथमा | दुःखम् | दुःखे | दुःखानि |
| द्वितीया | दुःखम् | दुःखे | दुःखानि |
| तृतीया | दुःखेन | दुःखाभ्याम् | दुःखैः |
| चतुर्थी | दुःखाय | दुःखाभ्याम् | दुःखेभ्यः |
| पञ्चमी | दुःखात् | दुःखाभ्याम् | दुःखेभ्यः |
| षष्ठी | दुःखस्य | दुःखयोः | दुःखानाम् |
| सप्तमी | दुःखे | दुःखयोः | दुःखेषु |
| सम्बोधनम् | दुःख | दुःखे | दुःखानि |

### अकारान्त पुल्लिङ्गाः शब्दाः

बालः पाठः वर्षाकालः काकः जनकः पर्जन्यः फलकः पाषाणः चटकः हस्तः तडागः मर्कटः पादः ब्राह्मणः उपदेशः कर्णः तीरः कोपः देवः पुत्रः वर्णः

### अकारान्त नपुंसकलिङ्गाः शब्दाः

वर्षणम् शरीरम् नयनम् सुखम् जलम् मुखम् वचनम् घर्षणम् द्वारम् वातायनम् स्नानम् पत्रम् उत्तरीयम् पुस्तकम् वस्त्रम् शयनम् गृहम्

## सर्वनामानि

### त्रिषु लिङ्गेषु समः 'अस्मद्' शब्दः

| विभक्तिः | ए. व. | द्वि व. | ब. व. |
|---|---|---|---|
| प्रथमा | अहम् | आवाम् | वयम् |
| द्वितीया | माम्, मा | आवाम्, नौ | अस्मान् नः |
| तृतीया | मया | आवाभ्याम् | अस्माभिः |

| | | | |
|---|---|---|---|
| चतुर्थी | मह्यम्, मे | आवाभ्याम्, नौ | अस्मभ्यम्, नः |
| पञ्चमी | मत् | आवाभ्याम् | अस्मत् |
| षष्ठी | मम, मे | आवयोः, नौ | अस्माकम्, नः |
| सप्तमी | मयि | आवयोः | अस्मासु |

## त्रिषु लिङ्गेषु समः 'युष्मद्' शब्दः

| विभक्तिः | ए. व. | द्वि व. | ब. व. |
|---|---|---|---|
| प्रथमा | त्वम् | युवाम् | यूयम् |
| द्वितीया | त्वाम्, त्वा | युवाम्, वाम् | युष्मान्, वः |
| तृतीया | त्वया | युवाभ्याम् | युष्माभिः |
| चतुर्थी | तुभ्यम्, ते | युवाभ्याम्, वाम् | युष्मभ्यम्, वः |
| पञ्चमी | त्वत् | युवाभ्याम् | युष्मत् |
| षष्ठी | तव, ते | युवयोः, वाम् | युष्माकम्, वः |
| सप्तमी | त्वयि | युवयोः | युष्मासु |

## 'तद्' पुलिङ्गे

| विभक्तिः | ए. व. | द्वि व. | ब. व. |
|---|---|---|---|
| प्रथमा | सः | तौ | ते |
| द्वितीया | तम् | तौ | तान् |
| तृतीया | तेन | ताभ्याम् | तैः |
| चतुर्थी | तस्मै | ताभ्याम् | तेभ्यः |
| पञ्चमी | तस्मात् | ताभ्याम् | तेभ्यः |
| षष्ठी | तस्य | तयोः | तेषाम् |
| सप्तमी | तस्मिन् | तयोः | तेषु |

एवम् 'एतद्' शब्दस्य पुल्लिङ्गानि रूपाणि एषः, एतौ, एते इत्यादीनि
एवम् च 'यद्' शब्दस्य पुल्लिङ्गानि रूपाणि यः, यौ, ये इत्यादीनि
एवम् च 'किम्' शब्दस्य पुल्लिङ्गानि रूपाणि कः, कौ, के इत्यादीनि

### 'तद्' स्त्रीलिङ्गे

| विभक्तिः | ए. व. | द्विव. | ब. व. |
|---|---|---|---|
| प्रथमा | सा | ते | ताः |
| द्वितीया | ताम् | ते | ताः |
| तृतीया | तया | ताभ्याम् | ताभिः |
| चतुर्थी | तस्यै | ताभ्याम् | ताभ्यः |
| पञ्चमी | तस्याः | ताभ्याम् | ताभ्यः |
| षष्ठी | तस्याः | तयोः | तासाम् |
| सप्तमी | तस्याम् | तयोः | तासु |

एवम् 'एतद्' शब्दस्य स्त्रीलिङ्गानि रूपाणि एषा, एते, एताः इत्यादीनि
एवम् च 'यद्' शब्दस्य स्त्रीलिङ्गानि रूपाणि या, ये, याः इत्यादीनि
एवम् च 'किम्' शब्दस्य स्त्रीलिङ्गानि रूपाणि का, के, काः इत्यादीनि

### 'तद्' नपुंसकलिङ्गे

| विभक्तिः | ए. व. | द्विव. | ब. व. |
|---|---|---|---|
| प्रथमा | तत् | ते | तानि |
| द्वितिया | तत् | ते | तानि |

शेषं पुल्लिङ्गवत्

एवम् 'एतद्', 'यद्', 'किम्' शब्दानां नपुंसकलिङ्गानि रूपाणि
एतत्, एते, एतानि, यत्, ये, यानि, किम्, के, कानि इत्यादीनि

# चतुर्दशः पाठः

## सुवृत्ताः बालाः




एकस्मिन् तडागे मण्डूकाः वसन्ति। एकदा बालाः तडागं गच्छन्ति। जले च पाषाणान् क्षिपन्ति। पाषाणानां प्रहारेण मण्डूकानां प्रभूतं दुःखं भवति। ततः एको मण्डूको जलात् बहिः आगच्छति वदति च। भोः बालाः, यूयं जले पाषाणान् किं क्षिपथ किमस्मान् पीडयथ च। एको बालो वदति। वयं पाषाणैः क्रीडामः। तदा स मण्डूको वदति। एतत् युष्माकं क्रीडनं भवति। अस्माकं तु भृशं दुःखं भवति। अतो जले पाषाणान् मा क्षिपतेतः च गच्छत। तदा ते सुवृत्ताः बालाः अन्यत्र गच्छन्ति।

### सन्धिविवरणम्

मण्डूकाः वसन्ति=मण्डूका वसन्ति

बालाः यूयम् = बाला यूयम्

बालाः अन्यत्र = बाला अन्यत्र

## स्वाध्यायः

**वियुज्य पदानि लिखत :—**

किमस्मान् । एको मण्डूको वदति ।

क्षिपतेतः ।

**वाक्यपूरणं कुरुत :—**

नारायणः ______ वसति ।

काकः घर्षणेन शरीरं ______ ।

रे बालाः, अलं ______ ।

बालाः क्रीडनं ______ ।

रे चटक, ______ उपदेशं कुरु ।

---

# पञ्चदशः पाठः

## त्रयो मत्स्याः




आस्ति मगधे नाम देशे फुल्लोत्पलो नाम तडागः । अथ एकदा धीवराः तत्र आगच्छन्ति वदन्ति च । वयमद्य अत्र

वसामः श्वो मत्स्यान् व्यापादयामः च । मत्स्या धीवराणां वचनं शृण्वन्ति । तत्र विचक्षणो मत्स्यः एको वदति । अद्य एवेतो गच्छामि । तथा च करोति । अन्यो मत्स्यो वदति । श्वः किं भवति तत् न अवगच्छामि । श्वः एव उचितं करोमि । तृतीयो मत्स्यो वदति । यत् वा तत् वा भवतु । न चिन्तनेन तत् अन्यथा भवति ।

अन्येद्युः धीवरा जालं प्रसारयन्ति । द्वौ अपि मत्स्यौ तस्मिन् पततः । परं द्वितीयो मृतवत् तिष्ठति । धीवराः तं जालात् बहिः निक्षिपन्ति । तदा स शीघ्रं गभीरं जलं प्रविशति । तृतीयं तु धीवरा व्यापादयन्ति ।

### सन्धिविवरणम्

श्वः एव = श्व एव

मत्स्यः एकः = मत्स्य एकः

धीवराः तत्र = धीवरास्तत्र

धीवराः तम् = धीवरास्तम्

### स्वाध्यायः

**वियुज्य पदानि लिखत :—**

फुल्लोत्पलो नाम । वयमद्य । मत्स्या धीवराणाम् । एवेतः । स शीघ्रम् ।

**वाक्यपूरणं कुरुत :—**

———— बालाः मण्डूकानां ———— शृण्वन्ति ।

धीवराः ———— पीडयन्ति ।

विचक्षणः मत्स्यः तडागात् ———— गच्छति ।

मत्स्याः ———— वसन्ति ।

नारायणः स्नानाय ———— जलं प्रविशति ।

———— चटकः गृहं करोति ।

## षोडशः पाठः

### मूर्खः कुक्कुरः



एकः कुक्कुरः कुत्रचित् मांसस्य एकं खण्डमधिगच्छति। तं मुखेन धारयति मार्गेण च गच्छति। तस्य मार्गे प्रस्रवणमस्ति। प्रस्रवणे च गभीरं जलमस्ति। यदा स जले अवलोकयति तदा स निजं प्रतिबिम्बं पश्यति। ततः स मूर्खः कुक्कुर एवं चिन्तयति। एतस्य कुक्कुरस्य मुखे अपि मांसखण्डोऽस्ति। तेन सह अहं कलहं करोमि मांसखण्डं च आक्षिपामि। परं यदा स मुखमुद्घाटयति तदा मांसखण्डस्तस्य मुखात् पतति जले निमज्जति च।

### मूर्खः कुक्कुरः

एकः कुक्कुरः कुत्रचित् मांसस्य एकं खण्डं लभते। तं मुखेन धारयते मार्गं क्रमते च। तस्य मार्गे प्रस्रवणं विद्यते। प्रस्रवणे च गभीरं जलं वर्तते। यदा स जले अवलोकयते तदा स निजं

प्रतिबिम्बं प्रेक्षते । ततः स मूर्खः कुक्कुर एवं चिन्तयते । एतस्य कुक्कुरस्य मुखे अपि मांसखण्डो विद्यते । अहं तेन सह कलहमारभे मांसखण्डं च आक्षिपे । परं यदा स मुखमुद्घाटयते तदा मांसखण्डस्तस्य मुखात् भ्रंशते जले विगाहते च ।

## वर्तमानकालः आत्मनेपदम्

| | | | | |
|---|---|---|---|---|
| अहं | लभे | विद्ये | क्षिपे | चिन्तये |
| आवां | लभावहे | विद्यावहे | क्षिपावहे | चिन्तयावहे |
| वयं | लभामहे | विद्यामहे | क्षिपामहे | चिन्तयामहे |
| त्वं | लभसे | विद्यसे | क्षिपसे | चिन्तयसे |
| युवां | लभेथे | विद्येथे | क्षिपेथे | चिन्तयेथे |
| यूयं | लभध्वे | विद्यध्वे | क्षिपध्वे | चिन्तयध्वे |
| सः | लभते | विद्यते | क्षिपते | चिन्तयते |
| तौ | लभेते | विद्येते | क्षिपेते | चिन्तयेते |
| ते | लभन्ते | विद्यन्ते | क्षिपन्ते | चिन्तयन्ते |

| धातुः | गणः | विकरणः |
|---|---|---|
| लभ् | १ | अ |
| विद् | ४ | य |
| क्षिप् | ६ | अ |
| चिन्त् | १० | अय |
| वृत् ( वर्तते ) | १ | |
| धृ ( धारयते ) | १० | |

## सन्धिविवरणम्

जले अवलोकयति = जलेऽवलोकयति

मुखे अपि = मुखेऽपि

# सप्तदशः पाठः

## वदान्यो भोजः

अस्ति पुरा भोजो नाम नृपः । स वदान्यः शूरः पण्डितः च अस्ति। एकदा स दीनवेशं धारयते नगरस्य मार्गे च क्रमते । ततः स कमपि ब्राह्मणमीक्षते । ब्राह्मणस्य हस्ते चर्ममयं भिक्षापात्रं विद्यते । नृपस्तं वन्दते पृच्छति च । किमिति चर्ममयं भिक्षापात्रं तुभ्यं रोचते न धातुमयम् । तस्य कान्तेन मुखेन सौम्येन वचनेन च एषः भोज इति ब्राह्मणो बोधति प्रतिभाषते च । सम्प्रति वदान्येषु शूरेषु च श्रेष्ठो भोजोऽस्माकं नृपः । तस्मात् ताम्रं लोहं च दुर्लभं विद्यतेऽधुना । नृपः पुनः पृच्छति । किं वा भोजस्य ताम्रेण लोहेन च प्रयोजनम् । ब्राह्मणः स्मयते भाषते च । लोहं तस्य नृपस्य अमित्राणां बन्धनाय कल्पते ताम्रं च दानपत्राणां लेखनाय । ब्राह्मणस्य चतुरेण उत्तरेण नृपो भृशं तुष्यति तस्मै च विपुलं सुवर्णं यच्छति ।

### सन्धिविवरणम्

च + अस्ति = चास्ति

नृपस्य + अमित्राणाम् = नृपस्यामित्राणाम्

एषः भोजः = एष भोजः

### स्वाध्यायः

**वियुज्य पदानि लिखत :—**

भोजो नाम । स दीनवेशं । ब्राह्मणमीक्षते । किमिति । भोज इति ।

भोजोऽस्माकम् । विद्यतेऽधुना । नृपस्तम् ।

वाक्यपूरणं कुरुत :—

सुवृत्ता : बाला : देवं———— ।

मर्कटस्य————न प्रयोजनं विद्यते ।

भोजस्य मुखं————वचनं च———— ।

कुक्कुराय मांसं————।

धीवराणां————मत्स्यानाम्————कल्पते ।

| तृतीयपुरुषस्य एकवचनम् | धातुः | गणः |
|---|---|---|
| क्रमते | क्रम् | १ |
| ईक्षते | ईक्ष् | १ |
| आरभते | आ+रभ् | १ |
| भ्रंशते | भ्रंश् | १ |
| विगाहते | वि+गाह् | १ |
| वन्दते | वन्द् | १ |
| रोचते | रुच् | १ |
| प्रतिभाषते | प्रति+भाष् | १ |
| स्मयते | स्मि | १ |
| कल्पते | कृप् | १ |

---

# अष्टादशः पाठः

## वञ्चको रसज्ञः

चोलेषु सुगुणो नाम नृपोऽस्ति । स पण्डितान् पूजयति । तेभ्यः च विपुलं धनं यच्छति । तस्मात् कुशला नराः प्रत्यहं राजकुलं सेवन्ते । तस्मात् नृपात् पारितोषिकं च लभन्ते । अथ एकदा कः चित् वञ्चको रसज्ञस्तत्रागच्छति । तं नृपः पृच्छति । कस्मिन् कार्ये कुशलस्त्वम् । स भाषतेऽहं रसज्ञः ।

रजतं ताम्रं लोहं वा सुवर्णं करोमि। स वस्तुत एवं न करोति।



केवलमज्ञान् जनान् वञ्चयति। तेभ्यो रजतं ताम्रं लोहं च हरति। एष वञ्चक इति नृपो बोधति। तस्मै च शून्यं सम्पुटं यच्छति। तदा विषण्णः स नृपं पृच्छति। महाराज, त्वं पण्डितेभ्यो विपुलं धनं यच्छसि। मां च किमेवमवमन्यसे। तदा नृपो भाषते। रसज्ञ, त्वं सुवर्णं स्वयमेव करोषि। तादृशाय तुभ्यं कियत् अहं यच्छामि। शून्यं सम्पुटं तु सुवर्णस्य निक्षेपणाय यच्छामि। तदा लज्जितः स वञ्चकोऽन्यत्र गच्छति।

## वञ्चको रसज्ञः

चोलेषु सुगुणो नाम नृपोऽस्ति। तेन पण्डिताः पूज्यन्ते। तेभ्यः च विपुलं धनं दीयते। तस्मात् कुशलैः नरैः प्रत्यहं राजकुलं सेव्यते। तस्मात् नृपात् पारितोषिकं च लभ्यते। अथ एकदा कः चित् वञ्चको रसज्ञस्तत्रागच्छति। स नृपेण पृच्छयते। कस्मिन् कार्ये कुशलस्त्वम्। स भाषतेऽहं रसज्ञः। रजतं ताम्रं

लोहं वा मया सुवर्णं क्रियते। स वस्तुत एवं न करोति। केवलमज्ञा जनास्तेन वञ्च्यन्ते। तेभ्यः च रजतं ताम्रं लोहं च ह्रियते। एष वञ्चक इति नृपो बोधति। तस्मै च नृपेण शून्यः सम्पुटो दीयते। तदा विषण्णेन तेन नृपः पृच्छ्यते। महाराज, त्वया पण्डितेभ्यो विपुलं धनं दीयते। अहं च किमेवमवमन्ये। तदा नृपो भाषते। रसज्ञ, त्वया सुवर्णं स्वयमेव क्रियते। तादृशाय तुभ्यं मया कियत् दीयते। शून्यः सम्पुटस्तु सुवर्णस्य निक्षेपणाय दीयते। तदा लज्जितः स वञ्चकोऽन्यत्र गच्छति।

## सन्धिविवरणम्

तेभ्यः च = तेभ्यश्च

कः चित् = कश्चित्

## कर्मणिप्रयोगः

| तृतीयपुरुषस्य एकवचनम् | धातुः |
|---|---|
| पूज्यते | पूज् १० ( पूजयति ) |
| दीयते | दा १ ( यच्छति ) |
| सेव्यते | सेव् १ ( सेवते ) |
| लभ्यते | लभ् १ ( लभते ) |
| पृच्छ्यते | प्रच्छ् ६ ( पृच्छति ) |
| क्रियते | कृ ८ ( करोति ) |
| वञ्च्यते | वञ्च् १० ( वञ्चयति ) |
| ह्रियते | हृ १ ( हरति ) |
| अवमन्यते | अव+मन् ४ ( अवमन्यते ) |

# नवदशः पाठः

## दुष्टः काकः




अस्ति अलकाया मार्गेऽतिविशालः पिप्पलवृक्षः । तत्र हंसश्च काकश्च निवसतः । कदाचित् ग्रीष्मे कश्चित् पथिकस्तत्र वृक्षतले काण्डं निक्षिपति निद्रां गच्छति च । क्षणेन च तस्य मुखात् वृक्षस्य छायापगच्छति । ततः सदयेन हंसेन तस्य मुखे सूर्यस्य प्रभा दृश्यते पक्षौ प्रसार्येते पुनस्तस्य मुखे छाया च क्रियते । ततः पथिको निद्राया निर्भरं सुखमनुभवति । निद्रायामेव च मुखमुद्घाटयति । तदा दुष्टः काकस्तस्य मुखे पुरीषोत्सर्गं करोति अपगच्छति च । यावत् पथिकः कोपेन ऊर्ध्वमवलोकयति तावत् स हंसमीक्षते काण्डेन च तं व्यापादयते ।

### सन्धिविवरणम्

अस्ति + अलकायाः = अस्त्यलकायाः

करोति + अपगच्छति = करोत्यपगच्छति

## स्वाध्यायः

**वियुज्य पदानि लिखत :—**

मार्गेऽतिविशालः । हंसश्च । पथिकस्तत्र । छायापगच्छति । पथिको निद्रांयाः । अलकाया मार्गे । मुखमुद्घाटयति ।

**वाक्यपूरणं कुरुत :—**

धीवरेण जालं———। यावत् कुक्कुरः मुखं उद्घाटयति तावत्— — —।

**विरुद्धार्थानि विशेषणानि लिखत :—**

सदयः हंसः × दुष्टः काकः
सुवृत्तः रामः × — गोविन्दः
चतुरः चटकः × — मर्कटः
पण्डितः भोजः × — नरः

**प्रयोगान्तरं कुरुत :—**

पथिकः वृक्षतले काण्डं निक्षिपति ।
सदयेन हंसेन तस्य मुखे सूर्यस्य प्रभा दृश्यते ।
पथिकः हंसं ईक्षते ।

### आकारान्तस्त्रीलिङ्गः "छाया" शब्दः

| विभक्तिः | ए. व. | द्वि.व. | ब. व. |
|---|---|---|---|
| प्रथमा | छाया | छाये | छायाः |
| द्वितीया | छायाम् | छाये | छायाः |
| तृतीया | छायया | छायाभ्याम् | छायाभिः |
| चतुर्थी | छायायै | छायाभ्याम् | छायाभ्यः |
| पञ्चमी | छायायाः | छायाभ्याम् | छायाभ्यः |
| षष्ठी | छायायाः | छाययोः | छायानाम् |
| सप्तमी | छायायाम् | छाययोः | छायासु |
| सम्बोधनम् | छाये | छाये | छायाः |

# विंशः पाठः

## अम्लानि फलानि




एकस्मिन् उद्याने एको वृक्षोऽस्ति। तस्य शाखासु मधुराणि फलानि सन्ति। एकदा एकः शृगालस्तं वृक्षं गच्छति। फलानि पश्यति चिन्तयति च। एतानि मधुराणि फलान्यहं भक्षयामि। ततः स तेभ्यः फलेभ्योऽनेकदा उत्पतति। परन्तु तानि फलानि न विन्दति। यदा स न फलान्यधिगच्छति तदा स कुप्यति वदति च। अहमेतेभ्यः फलेभ्यो न स्पृहयामि। एतानि न मधुराणि परमतीवाम्लानि। ततः सोऽन्यत्र गच्छति।

## अम्लानि फलानि।

एकस्मिन् उद्याने एको वृक्ष आसीत्। तस्य शाखासु मधुराणि फलान्यासन्। एकदा एकः शृगालस्तं वृक्षमगच्छत्।

फलान्यपश्यत् अचिन्तयत् च। एतानि मधुराणि फलान्यहं भक्षयामि। ततः स तेभ्यः फलेभ्योऽनेकदा उदपतत्। परन्तु तानि फलानि नाविन्दत्। यदा स न फलान्यध्यगच्छत् तदा सोऽकुप्यत् अवदत् च। अहमेतेभ्यः फलेभ्यो न स्पृहयामि। एतानि न मधुराणि परमतीवाम्लानि। ततः सोऽन्यत्रागच्छत्।

### भूतकालः परस्मैपदम्

| | | | | |
|---|---|---|---|---|
| अहं | अवदम् | अकुप्यम् | अविन्दम् | अचिन्तयम् |
| आवाम् | अवदाव | अकुप्याव | अविन्दाव | अचिन्तयाव |
| वयम् | अवदाम | अकुप्याम | अविन्दाम | अचिन्तयाम |
| त्वम् | अवदः | अकुप्यः | अविन्दः | अचिन्तयः |
| युवाम् | अवदतम् | अकुप्यतम् | अविन्दतम् | अचिन्तयतम् |
| यूयम् | अवदत | अकुप्यत | अविन्दत | अचिन्तयत |
| सः | अवदत् | अकुप्यत् | अविन्दत् | अचिन्तयत् |
| तौ | अवदताम् | अकुप्यताम् | अविन्दताम् | अचिन्तयताम् |
| ते | अवदन् | अकुप्यन् | अविन्दन् | अचिन्तयन् |

### अस् २

| | | |
|---|---|---|
| आसम् | आस्व | आस्म |
| आसीः | आस्तम् | आस्त |
| आसीत् | आस्ताम् | आसन् |

## स्वाध्यायः

**वियुज्य पदानि लिखत :—**

फलान्यहम्। फलेभ्योऽनेकदा। नाधिगच्छति।
सोऽन्यत्र। शृगालस्तम्।

**प्रयोगान्तरं कुरुत :—**

शृगालः फलानि पश्यति।
सः फलानि न अधिगच्छति।

---

# एकविंशः पाठः

## जलदेवतायाः प्रसादः

कश्चित् वनचरो वने मार्गमक्रमत। तस्य हस्ते च सुवर्णमयः कलशोऽविद्यत। अथ कश्चित् पथिकस्तं सुवर्णमयं कलशमैक्षतापृच्छत् च। भद्र, कुतोऽलभथाः सुवर्णमयं कलशमेनम्। वनचरः प्रत्यभाषत। अहं स्नानाय तडागमगच्छम्। जलं चावागाहे। तत्र एष मम पादेऽलगत्। अहं तं समाहरम्। पथिकोऽचिन्तयत्। अहमपि सुवर्णमयं कलशं समाहरामि। स वनचरमभाषत च। भद्र, आगच्छ मया सह। दर्शय तं तडागम्। ततस्तौ तडागमायेताम्। पथिको जलमगाहत। जलात् च कलशं समाहरत्। परं स कलशस्ताम्रमयो न सुवर्णमयः। तदा वनचरो मामवञ्चयत् इति सोऽमन्यत। क्रोधात् च कलशं वनचरं प्रत्यक्षिपत। तस्मिन् एव क्षणे जले जलदेवता प्राकाशत। तं नृशंसं पथिकं च दृष्टिपातेन एव व्यापादयत।

### सन्धिविवरणम्

दृष्टिपातेन+एव=दृष्टिपातेनैव

### स्वाध्यायः

**वियुज्य पदानि लिखत :—**

पथिकस्तम्। एष मम। पादेऽलगत्। प्रत्यक्षिपत।

---

## द्वाविंशः पाठः

### भूतकालः आत्मनेपदम्

| | | | | |
|---|---|---|---|---|
| अहं | अलभे | अविध्ये | अक्षिपे | अचिन्तये |
| आवाम् | अलभावहि | अविध्यावहि | अक्षिपावहि | अचिन्तयावहि |
| वयम् | अलभामहि | अविध्यामहि | अक्षिपामहि | अचिन्तयामहि |
| त्वम् | अलभथाः | अविध्यथाः | अक्षिपथाः | अचिन्तयथाः |
| युवाम् | अलभेथाम् | अविध्येथाम् | अक्षिपेथाम् | अचिन्तयेथाम् |
| यूयम् | अलभध्वम् | अविध्यध्वम् | अक्षिपध्वम् | अचिन्तयध्वम् |
| सः | अलभत | अविध्यत | अक्षिपत | अचिन्तयत |
| तौ | अलभेताम् | अविध्येताम् | अक्षिपेताम् | अचिन्तयेताम् |
| ते | अलभन्त | अविध्यन्त | अक्षिपन्त | अचिन्तयन्त |

---

## त्रयोविंशः पाठः

### सुभाषितानि

हस्तस्य भूषणं दानं सत्यं कण्ठस्य भूषणम् ।
श्रोत्रस्य भूषणं शास्त्रं भूषणैः किं प्रयोजनम् ॥ १ ॥
प्रदोषे दीपकश्चन्द्रः प्रभाते दीपको रविः ।
त्रैलोक्ये दीपको धर्मः सुपुत्रः कुलदीपकः ॥ २ ॥
उत्सवे व्यसने चैव दुर्भिक्षे शत्रुविग्रहे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥ ३ ॥
उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥ ४ ॥

सर्वनाशे समुत्पन्नेऽर्धं त्यजति पण्डितः ।
अर्धेन कुरुते कार्यं सर्वनाशो हि दुःसहः ॥ ५ ॥
अलसस्य कुतो विद्या अविद्यस्य कुतो धनम् ।
अधनस्य कुतो मित्रं अमित्रस्य कुतः सुखम् ॥ ६ ॥
यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥ ७ ॥
छायामन्यस्य कुर्वन्ति तिष्ठन्ति स्वयमातपे ।
फलान्यपि परार्थाय वृक्षाः सत्पुरुषा इव ॥ ८ ॥

---

## चतुर्विंशः पाठः



### उपाय एवापायः

आस्ति दण्डकायां गृध्रकूटो नाम पर्वतः । तत्रापगायास्तीरे न्यग्रोधवृक्षे बका न्यवसन् । तस्य वृक्षस्याधस्तात् विवरे सर्पोऽतिष्ठत् । सर्पश्च तेषां शावकान् अखादत् । अथ कश्चित् विहगो

बकानां विलापमशृणोत् अभाषत च । यूयं कुरुतैवम् । नकुल-विवरात्प्रभृति सर्पविवरं यावत् क्रमेण मत्स्यान् विकिरत । बकास्तथाकुर्वन् । ततो मत्स्यानां भक्षणाय नकुला आगच्छन् सर्पमैक्षन्त स्वाभाविकात् विद्वेषात् च तं व्यापादयन् । परं ते वृक्षे बकशावकानां रावमशृण्वन् वृक्षमारोहन् बकशावकान् चाभक्षयन् ।

### समासविवरणम्

नकुलविवरात् = नकुलस्य विवरात् ( षष्ठीतत्पुरुषः )
सर्पविवरम् = सर्पस्य विवरम् ( षष्ठीतत्पुरुषः )

### पूर्वकालवाचकं धातुसाधितमव्ययम्

विहगः बकानां विलापं अशृणोत् अवदत् च=विहगः बकानां विलापं श्रुत्वा अवदत् ।
नकुलाः सर्पं अपश्यन् तं व्यापादयन् च=नकुलाः सर्पं दृष्ट्वा तं व्यापादयन् ।

### स्वाध्यायः

**वियुज्य पदानि लिखत :—**

सर्पश्च । कुरुतैवम् । आपगायास्तीरे ।

**वाक्यानि रचयत :—**

नकुलस्य सर्पस्य च ( स्वाभाविक ) विद्वेषः ।
सर्पस्य ( नाश ) विहगः उपायं ( वद् ) ।
बकाः मत्स्यान् ( वि+कॄ ) ।

---

# पञ्चविंशः पाठः

## वञ्चना नाशाय

अस्त्यलकायां विलासो नाम रजकः । तस्य गर्दभो घासाभावात् दुर्बलोऽभवत् । ततः स रजको दैवात् व्याघ्राजिनमेकं

कुत्रचित् अलभत। सोऽचिन्तयत्। यदि गर्दभमेतेनाच्छाद्य




क्षेत्रे मोचयामि तर्हि क्षेत्रपास्तं व्याघ्रं मत्वा भयात् तस्य उपद्रवं न कुर्वन्ति। तथा च सोऽकरोत्। तदा क्षेत्ररक्षकास्तं रासभं न त्रासयन्ति। स च निर्भरं सस्यं भक्षयति। कतिपयैः दिनैश्च स पीनोऽभवत्। अथैकदा स क्षेत्रात् अनतिदूरेऽन्यं रासभमैक्षत। तदा उच्चैः शब्दं कृत्वा स तमन्यं रासभं प्रत्यधावत्। स्वरात् तु तं गर्दभं बुद्ध्वा क्षेत्रपास्तम् लगुडैः अताडयन् तस्य प्राणान् चाहरन्।

### सन्धिविवरणम्

कतिभिः दिनैः = कतिभिर्दिनैः

लगुडैः अताडयन् = लगुडैरताडयन्

तस्य + उपद्रवम् = तस्योपद्रवम्

तदा + उच्चैः = तदोच्चैः

### स्वाध्यायः

**वियुज्य पदानि लिखत :—**

अस्त्यलकायाम्। अथैकदा। प्रत्यधावत्।
क्षेत्रपास्तम्।

विग्रहं कुरुत :—

घासाभावात् । व्याघ्राजिनम् । क्षेत्ररक्षकः ।

पूर्वकालवाचकानां धातुसाधितानां स्थाने क्रियापदानि लिखत :—

क्षेत्रपास्तं व्याघ्रं मत्वा तस्य उपद्रवं न कुर्वन्ति ।

रासभ उच्चैः शब्दं कृत्वाधावत् ।

क्षेत्रपास्तं गर्दभं बुद्ध्वाताडयन् ।

---

## षड्विंशः पाठः

### परनियोगचर्चा न युक्ता

अस्त्यवन्तिकायां कर्पूरपटको नाम रजकः । अथैकदा निशायां स निद्रित आसीत् । तदैव चौरास्तस्य गृहं प्रविष्टाः । तस्य प्राङ्गणे रासभः स्थितः कुकुरश्चोपविष्टो वर्तते । चोरान् दृष्ट्वा गर्दभः कुक्कुरमवदत् । मित्र, तव तावद् एष नियोगः । तत् किमिति त्वमुच्चैर्न शब्दं करोष्यधिपं च न जागरयसि । कुक्कुरोऽभाषत । भद्र मम नियोगचर्चां मा कुरु । त्वमेव किं न बोधसि यथेशस्याहर्निशं गृहरक्षां करोमि । परमेष ममोपयोगं न बोधत्युचितमाहारमपि न यच्छति । यतः सङ्कटाभावेऽधिपा भृत्यानामनादरं कुर्वन्ति । गर्दभोऽवदत् शृणु रे नीच । कार्यकाले यो याचते स नैव भृत्यः । एतत् श्रुत्वा कुक्कुरः प्रत्यभाषत । यः कार्यकाले एव मधुरं भाषते स नैवाधिपः । ततो गर्दभः सकोपमवदत् । अरे पापस्त्वं यत् संकटे नाथकार्यं न करोषि । भवतु तावत् । यथाधिपो जागरितो भवति तथा करोम्यहमित्युक्त्वा चीत्कारमुच्चैरकरोत् । तेन प्रबुद्धो रजको निद्राभङ्गात्कुपितो गर्दभं लगुडेनाताडयत् ।

### धातुसाधितानि

प्रविष्टाः = प्राविशन्
स्थितः = अतिष्ठत्
उपविष्टः = उपाविशात्
कुपितः = अकुप्यत्

### स्वाध्यायः

**वियुज्य पदानि लिखत :—**

तदैव । कुक्कुरश्चोपविष्टः । उच्चैर्न । करोष्यधिपम् ।
यथेशस्य । करोम्यहमित्युक्त्वा ।

**विग्रहं कुरुत :—**

परनियोगचर्चा । गृहरक्षाम् । सङ्कटाभावे । कार्यकाले । नाथकार्यम् ।

**वाक्यानि रचयत :—**

( स्नान ) नारायणः ( जल ) प्रविष्टः ।
( कुक्कुर ) ( रजक ) गृहरक्षां करोति ।
( राव ) श्रुत्वा ( नकुल ) वृक्षं आरूढः ।

---

# सप्तविंशः पाठः

## त्रयाणाम् धूर्तानाम्

अस्ति गौतमस्यारण्ये कश्चित् ब्राह्मणः । तेन च यज्ञः प्रारब्धः । सोऽन्यं ग्रामं गतः । छागं चोपक्रीय स्कन्धे कृत्वा मार्गं क्रमते । मार्गे च धूर्तत्रयेण दृष्टः । ततस्ते धूर्ता यद्येष छागः केनाप्युपायेन लभ्यते तदा मतिप्रकर्षो भवतीति समालोच्य वृक्षत्रयतले क्रोशान्तरेण तस्य ब्राह्मणस्यागमनं प्रतीक्ष्य मार्गे स्थिताः । तत्रैकेन धूर्तेन ब्राह्मणोऽभिहितः । भो ब्राह्मण, किमिति कुक्कुरः स्कन्धेनोह्यते । विप्रेणोक्तम् । एष न कुक्कुरः किं तु यज्ञच्छागः । अथ क्रोशान्तरे स्थितेन द्वितीयेन धूर्तेन

तथैवोक्तम् । तस्य वचनं ब्राह्मणेन श्रुतम् । तत् आकर्ण्य च




ब्राह्मणेन छागोऽधो निक्षिप्तो मुहुर्निरीक्षितः पुनश्च स्कन्धे कृतः । ससंशयं ब्राह्मणः पुनर्मार्गं क्रमते । यतः पण्डितानामपि चित्तं खलवचनैर्दोलायते ।

ततस्तृतीयस्य धूर्तस्य वचनं श्रुत्वा स्वमतिभ्रमं निश्चित्य छागो ब्राह्मणेन त्यक्तः । स्नात्वा ब्राह्मणो गृहं गतः । ततो धूर्तैः छागो नीतो भक्षितश्च ।

### भूतकालः

| धातुसाधितानि | कर्मणि प्रयोगः | कर्तरि प्रयोगः |
|---|---|---|
| ब्राह्मणेन यज्ञः प्रारब्धः । | ब्राह्मणेन यज्ञः प्रारभ्यत । | ब्राह्मणः यज्ञं प्रारभत । |
| धूर्तत्रयेण ब्राह्मणः दृष्टः । | धूर्तत्रयेण ब्राह्मणः अदृश्यत । | धूर्तत्रयं ब्राह्मणं अपश्यत् । |
| ब्राह्मणेन छागः निक्षिप्तः । | ब्राह्मणेन छागः न्यक्षिप्यत । | ब्राह्मणः छागं न्यक्षिपत् । |
| ब्राह्मणेन छागः निरीक्षितः । | ब्राह्मणेन छागः निरैक्ष्यत । | ब्राह्मणः छागं निरैक्षत । |
| ब्राह्मणेन छागः स्कन्धे कृतः । | ब्राह्मणेन छागः स्कन्धे अक्रियत । | ब्राह्मणः छागं स्कन्धे अकरोत् । |

| | | |
|---|---|---|
| ब्राह्मणेन छागः त्यक्तः। | ब्राह्मणेन छागः अत्यज्यत। | ब्राह्मणः छागं अत्यजत्। |
| धूर्तैः छागः नीतः। | धूर्तैः छागः अनीयत। | धूर्ताः छागं अनयन्। |
| धूर्तैः छागः भक्षितः। | धूर्तैः छागः अभक्ष्यत। | धूर्ताः छागं अभक्षयन्। |

---

# अष्टाविंशः पाठः

## धन्यो नृपः

( ततः प्रविशति यौगन्धरायणस्तापसश्च )

यौगन्धरायणः—भोः कुत आगम्यते। क्व गम्यते। क्वाधिष्ठानमार्यस्य।

तापसः—भोः श्रूयताम्। राजगृहात् आगतोऽस्मि। वेदाध्ययनाय लावणिके नाम ग्रामेऽवसम्।

यौगन्धरायणः—अथ परिसमाप्ता विद्या।

तापसः—न खलु तावत्।

यौगन्धरायणः—यद्यसमाप्ता विद्या किमागमनप्रयोजनम्।

तापसः—तत्र खलु दारुणं व्यसनं संवृत्तम्।

यौगन्धरायणः—कथमिव।

तापसः—तत्रोदयनो नाम नृपः प्रतिवसति।

यौगन्धरायणः—श्रूयते। किं सः।

तापसः—तस्य वासवदत्ता नाम भार्या दृढमतिवल्लभा किल।

यौगन्धरायणः—भवतु। ततस्ततः।

तापसः—ततस्तस्मिन् मृगयां गते ग्रामदाहेन सा दग्धा।

यौगन्धरायणः—ततस्ततः।

तापसः—ततः प्रतिनिवृत्तो नृपस्तं वृत्तान्तं श्रुत्वातीव दुःखितः प्राणान् परित्यक्तुमैच्छत्। प्रयत्नेनामात्यैर्वारितः।

यौगन्धरायणः—ततस्ततः ।

तापसः—किन्तु स भूपतिः हा प्रिये, हा वासवदत्ते, इति बहु व्यलपत् । शोकार्तं नृपममात्यैर्यत्नेन तस्मात् ग्रामात् गृहीत्वापक्रान्तम् । ततो निष्क्रान्ते नृपे नक्षत्रचन्द्रविरहितमाकाशमिवारमणीयः संवृत्तः स ग्रामः । ततोऽहमपि निर्गतोऽस्मि ।

यौगन्धरायणः—स खलु धन्यो नृपो यः पथिकेनापि प्रशस्यते ।

तापसः—अधुना गन्तुमिच्छामि ।

यौगन्धरायणः—गम्यतामर्थसाधनाय ।

तापसः—तथास्तु ।

### सत्सप्तमी

तस्मिन् मृगयां गते ग्रामदाहेन सा दग्धा = यदा सः मृगयां गतः तदा सा ग्रामदाहेन दग्धा ।

निष्क्रान्ते नृपे सः ग्रामः अरमणीयः संवृत्तः = यदा नृपः निष्क्रान्तः तदा सः ग्रामः अरमणीयः संवृत्तः ।

### स्वाध्यायः

**वियुज्य पदानि लिखत :—**

यद्यसमाप्ता । ततस्तस्मिन् । प्रयत्नेनामात्यैर्वारितः ।
तत्रोदयनः । तापसश्च ।

**विग्रहं कुरुत :—**

ग्रामदाहेन । अर्थसाधनाय । वेदाध्ययनाय ।

---

# नवविंशः पाठः

## सर्पमारूढस्य मण्डूकनाथस्य

अस्ति जीर्णोद्याने मन्दविषो नाम सर्पः । स अतिजीर्णतयाहारस्यान्वेषणायाक्षमः । एकदा जलाशयतीरे तस्मिन्

स्थिते दूरात् कश्चित् मण्डूकस्तत्रागतः । तेन सर्पो दृष्टः पृष्टश्च । किमिति त्वमाहारं नान्विष्यसि । सर्पोऽवदत् । गच्छ भद्र । मम मन्दभाग्यस्य प्रश्नेन किम् । ततः कौतुकेन स भेकः सर्वथा कथ्यतामित्याह । सर्पोऽप्याह । भद्र, कस्यचित् श्रोत्रियस्य पुत्रो विंशतिवर्षदेशीयो सर्वगुणसम्पन्नो दुर्दैवात् मया नृशंसेन दष्टः । ततोऽहं तेन शोकाकुलेन ब्राह्मणेन शप्तः । यद् अद्यारभ्य मण्डूकानां वाहनं भवसि । अतो ब्राह्मणशापात् मण्डूकानां वहनायात्र तिष्ठामि । अनन्तरं तेन मण्डूकेन गत्वा मण्डूक-नाथस्य जालपादस्य नामाग्रे तत् कथितम् । तत आगत्यैष मण्डूकनाथस्तस्य सर्पस्य पृष्ठमारूढः । स सर्पस्तं पृष्ठे कृत्वा चिरमभ्रमत् । परेद्युश्चलनायासमर्थं तं मण्डूकनाथोऽवदत् । किमद्य त्वं मन्दं गच्छसि । सर्पोऽभाषत । देव, आहारविरहात् असमर्थोऽस्मि । मण्डूकनाथोऽवदत् । अस्माकमाज्ञया मण्डूकान् भक्षय । ततो गृहीत एष महाप्रसाद इत्युक्त्वा क्रमशो मण्डूका-नभक्षयत् । अन्ते च मण्डूकनाथोऽपि तेन खादितः ।

## तुमन्तानि

आहारस्य अन्वेषणाय = आहारं अन्वेष्टुम्
मण्डूकानां वहनाय = मण्डूकान् वोढुम्
चलनाय असमर्थः = चलितुं असमर्थः

## स्वाध्यायः

**वियुज्य पदानि लिखत :—**

मण्डूकस्तत्रागतः । कथ्यतामित्याह । ततोऽहम् । अद्यारभ्य । तत आगत्यैष मण्डूकनाथस्तस्य ।

**विग्रहं कुरुत :—**

आहारान्वेषणाय । जलाशयतीरे । ब्राह्मणशापात् । मण्डूकनाथस्य । आहारविरहात् ।

# त्रिंशः पाठः

## अविवेको विषादाय

अस्ति किष्किन्धायां माधवो नाम विप्रः। तस्य भार्या प्रसूता। सा बालापत्यस्य रक्षणाय ब्राह्मणमवस्थाप्य स्नातुं गता। अत्रान्तरे ब्राह्मणो पार्वणश्राद्धाय नृपेणाहूतः। ततो ब्राह्मणो दारिद्र्यात् अचिन्तयत्। यदि सत्वरं न गच्छामि तदा तत्रान्यः कश्चित् श्राद्धमायच्छति। किन्तु बालकस्यात्र न कोऽपि रक्षकः। तत् किं करोमि। भवतु। चिरं पालितमेनं नकुलं बालकं रक्षितुं व्यवस्थाप्य गच्छामि। तथा कृत्वा श्राद्धमादातुं गतः। ततस्तेन नकुलेन बालकसमीपमागतः कृष्णः सर्पो दृष्ट्वा व्यापादितः खण्डितश्च। तत एष नकुलो ब्राह्मणमवलोक्य सत्वरमुपगम्य तस्य चरणयोरलुठत्। ततस्तस्य रक्तेन विलिप्तं मुखं दृष्ट्वा बालक एतेन खादित इत्यवधार्य नकुलं स व्यापादयत्। अनन्तरं यावत् उपसृत्यापत्यं पश्यति तावत् बालकः सुस्थः सर्पश्च व्यापादितस्तिष्ठति। ततस्तमुपकारकं नकुलं मृतं निरीक्ष्य स परं विषादमगच्छत्।

### सन्धिविवरणम्

दारिद्र्यात् + अचिन्तयत् = दारिद्र्यादचिन्तयत्

यावत् + उपसृत्य = यावदुपसृत्य

तावत् + बालकः = तावद्बालकः

### स्वाध्यायः

**सत्सप्तमीं योजयत :—**

यदा विप्रः गतः तदा सर्पः गृहं प्राविशत्।

यदा विद्या समाप्ता भवति तदा तापसः गृहं गच्छति।

तुमन्ताना स्थाने नामानि लिखत :—

स्नातुं गता =

बालकं रक्षितुम् =

श्राद्धं आदातुम् =

युक्तानि धातुसाधितानि योजयत :—

सर्पेण मण्डूकराजः ———— ।

ब्राह्मणः धूर्तत्रयेण ———— ।

वासवदत्ता ग्रामदाहेन ———— ।

नृपः प्राणत्यागात् अमात्यैः ———— ।

श्रोत्रियस्य पुत्रः सर्पेण ———— ।

---

# एकत्रिंशः पाठः




## व्याघ्रतां नीतो मूषकः

अस्ति गौतमस्य ऋषेस्तपोवने तपोधनो नाम मुनिः। स्नानाय गते मुनौ मूषकशावकः कश्चित् काकमुखाद् भ्रष्टः। सदयेन मुनिना स आनीतो व्रीहिभिश्च संवर्धितः। ततो बिडालस्तं

मूषकं भक्षयितुमुपधावति । तमवलोक्य मूषिकस्तस्य मुनेः क्रोडं प्रविशति । ततो मुनिरवदत् । मूषिक, त्वं मार्जारो भव । ततः स बिडालः कुक्कुरं दृष्ट्वा पलायते । ततो मुनिनोक्तम् । सारमेयाद् बिभेषि । त्वमेव सारमेयो भव । स सारमेयो व्याघ्राद् बिभेति । ततस्तेन मुनिना कुक्कुरो व्याघ्रः कृतः । अथ व्याघ्रमपि तं मूषिकमिवेक्षते स मुनिः । अथ तं मुनिं व्याघ्रं च दृष्ट्वा सर्वे वदन्ति । अनेन मुनिना मूषिको व्याघ्रतां नीतः । एतत् श्रुत्वा स व्याघ्रो दुःखितो भूत्वाचिन्तयत् । यावदेष मुनिर्जीवति तावदेषा मे स्वरूपाख्याकीर्तिकरा न नश्यति । इत्यालोच्य स मुनिं हन्तुं गतः । ततो मुनिना ज्ञात्वा पुनः मूषिको भवेत्युक्त्वा मूषक एव कृतः ।

इकारान्तपुंलिङ्गः "मुनि" शब्दः

| विभक्तिः | ए. व. | द्विव. | ब. व. |
|---|---|---|---|
| प्र. | मुनिः | मुनी | मुनयः |
| द्वि | मुनिम् | मुनी | मुनीन् |
| तृ. | मुनिना | मुनिभ्याम् | मुनिभिः |
| च. | मुनये | मुनिभ्याम् | मुनिभ्यः |
| पं. | मुनेः | मुनिभ्याम् | मुनिभ्यः |
| ष. | मुनेः | मुन्योः | मुनीनाम् |
| स. | मुनौ | मुन्योः | मुनिषु |
| सं. | मुने | मुनी | मुनयः |

## स्वाध्यायः

**वियुज्य पदानि लिखत :—**

ऋषेस्तपोवने । मुनिरवदत् । मुनिनोक्तम् ।
मूषिकमिवेक्षते । यावदेष मुनिर्जीवति । इत्यालोच्य । भवेत्युक्त्वा ।

**विग्रहं कुरुत :—**

मूषकशावकः । आश्रमसन्निधौ । काकमुखात् । स्वरूपाख्या ।

**सत्सप्तमीं योजयत :—**

यदा नारायणः जलं प्रविष्टः तदा तस्य पुत्रः वस्त्राणि अनयत् ।

यदा धीवराः आगताः तदा विचक्षणः मत्स्यः अन्यत्र अगच्छत् ।

**तुमन्तानां स्थाने नामानि लिखत :—**

मुनिं हन्तुं =

मूषकं भक्षयितुम् =

---

# द्वात्रिंशः पाठः




## पङ्कमग्नो गजः

अस्ति ब्रह्मारण्ये कर्पूरतिलको नाम गजः । तमवलोक्य सर्वे शृगालाश्चिन्तयन्ति स्म । यद्येष केनाप्युपायेन म्रियते तदास्माकमेतस्य देहेन मासचतुष्टयस्य भोजनं भवति । तत एकेन

वृद्धेन शृगालेन प्रतिज्ञातम्। अहं बुद्धिप्रभावादेतस्य मरणं साधयामि। अनन्तरं स गजस्य समीपं गत्वा प्रणम्य चावदत्। देव, दृष्टिप्रसादं कुरु। गजोऽभाषत। कस्त्वम्। कुतः समायातः। सोऽवदत्। शृगालोऽहम्। सर्वैर्वनस्थैः सत्त्वैस्तव सन्निधौ प्रेषितः। यद् नृपतिना विना जीवितं न युक्तं तदत्र वनराज्येऽभिषेक्तुं त्वं सर्वगुणैरुपेतो निरूपितः। तद् यथा लग्नवेला न विचलति तथागच्छतु देवः। इत्युक्त्वोत्थाय चलितः।

ततो राज्यतृष्णयाकृष्टः स गजः शृगालमार्गेणाधावत् पङ्के निमग्नश्च। तदा तेनोक्तम्। मित्र शृगाल, किमधुना करवाणि। पङ्के पतितो म्रिये। शृगालेन विहस्योक्तम्। देव, मम पुच्छमवलम्ब्योत्तिष्ठ।

ततो महापङ्के निमग्नो गजः शृगालैर्भक्षितः।

## स्वाध्यायः

**वियुज्य पदानि लिखत :—**

यदत्र। इत्युक्त्वोत्थाय। यद्येष। केनाप्युपायेन।

**विग्रहं कुरुत :—**

वनराज्ये। राज्यतृष्णया। लग्नवेला। मासचतुष्टयम्।

**वाक्यानि रचयत :—**

१ (रजक) चिरं पालितः (गर्दभ) तस्य (गृह) रक्षति।
२ यदि (अधिप) न जागरयामि तदा (चोर) तस्य (धन) अपहरन्ति।
३ (लावाणिक) नाम (ग्राम) (उदयन) नाम (नृप) अवसत्।
४ (कार्य) (उद्यम) (सिधू)।
५ (मांसखण्ड) कुक्कुरमुखात् (भ्रष्ट)।

---

# त्रयस्त्रिंशः पाठः

## आज्ञार्थः परस्मैपदम्

| | | | | |
|---|---|---|---|---|
| अहम् | वदानि | कुप्यानि | क्षिपाणि | चिन्तयानि |
| आवाम् | वदाव | कुप्याव | क्षिपाव | चिन्तयाव |
| वयम् | वदाम | कुप्याम | क्षिपाम | चिन्तयाम |
| त्वम् | वद | कुप्य | क्षिप | चिन्तय |
| युवाम् | वदतम् | कुप्यतम् | क्षिपतम् | चिन्तयतम् |
| यूयम् | वदत | कुप्यत | क्षिपत | चिन्तयत |
| सः | वदतु | कुप्यतु | क्षिपतु | चिन्तयतु |
| तौ | वदताम् | कुप्यताम् | क्षिपताम् | चिन्तयताम् |
| ते | वदन्तु | कुप्यन्तु | क्षिपन्तु | चिन्तयन्तु |

---

# चतुस्त्रिंशः पाठः

## अनिष्टो वरः

पुरा दैत्यौ सुन्द उपसुन्दश्च नामाभवताम् । ताभ्यां प्रभूतेन कायक्लेशेन चिरात् चन्द्रशेखर आराधितः । ततस्तयोर्महेशः परितुष्टो वरं वरयेथामित्यवदत् । उन्मत्तौ तौ अभाषेताम् । यद्यावयोर्देवः परितुष्टस्तदा स्वप्रियां पार्वतीमावाभ्यां यच्छतु । अथ देवेन क्रुद्धेन वरप्रदानस्यावश्यकतया विचारमूढाभ्यां पार्वती प्रदत्ता । ततस्तस्या रूपलावण्येन लुब्धाभ्यामुत्सुकाभ्यां पापाभ्यामेषा ममेति कलह आरब्धः । प्रमाणपुरुषं कञ्चित् निर्णयाय प्रार्थयावहै इति च ताभ्यां निश्चितम् । तदा स एव महेशो वृद्धद्वि-

जरूपः समागत्य तत्रोपस्थितः। तौ ब्राह्मणमवदताम्। आवयोः कलहः संजातः। तद् मध्यस्थो भद्रो निर्णयाय प्रमाणपदे वर्तताम्। द्विजः प्रत्यभाषत। एवमस्तु। कलहकारणं कथयेथाम्। दैत्याभ्यामुक्तम्। तपोबलेनावाभ्यां लब्धा कस्यावयोरेषा भवति तद् भद्रः कथयताम्। ब्राह्मणेनोक्तम्। ज्ञानश्रेष्ठो द्विजः पूज्यः क्षत्रियः प्रबलस्तथा। युवां च क्षत्रियौ। तस्माद् युद्धेनैव युवां निर्णयं प्रतिपद्येथाम्। द्विजवचनं श्रुत्वा साधूक्तमनेनेति कृत्वा समकालमन्योन्यघातेन विनाशमुपगतौ।

### आज्ञार्थः आत्मनेपदम्

| | | | | |
|---|---|---|---|---|
| अहं | लभै | पद्यै | क्षिपै | कथयै |
| आवां | लभावहै | पद्यावहै | क्षिपावहै | कथयावहै |
| वयं | लभामहै | पद्यामहै | क्षिपामहै | कथयामहै |
| त्वं | लभस्व | पद्यस्व | क्षिपस्व | कथयस्व |
| युवां | लभेथाम् | पद्येथाम् | क्षिपेथाम् | कथयेथाम् |
| यूयं | लभध्वम् | पद्यध्वम् | क्षिपध्वम् | कथयध्वम् |
| सः | लभताम् | पद्यताम् | क्षिपताम् | कथयताम् |
| तौ | लभेताम् | पद्येताम् | क्षिपेताम् | कथयेताम् |
| ते | लभन्ताम् | पद्यन्ताम् | क्षिपन्ताम् | कथयन्ताम् |

### स्वाध्यायः

**वियुज्य पदानि लिखत :—**

ततस्तयोर्महेशः। यद्यावयोर्देवः। ममेति। कलह आरब्धः।

**विग्रहं कुरुत :—**

वरप्रदानस्य। रूपलावण्येन। द्विजवचनम्।

यथाक्रमं शब्दान् स्थापयित्वा वाक्यानि रचयतः—

आगच्छतु, दूतेन, ब्राह्मणः, उक्तम्, इति, दानग्रहणाय, सत्वरं।

नृपः, सर्वगुणैः, सत्त्वैः, इति, निश्चितं, निरूप्यताम्, उपेतः।

ब्राह्मणस्य, अत्र, मण्डूकान्, शापात्, वोढुं, तिष्ठामि।

---

# पञ्चत्रिंशः पाठः

## गोग्रहणे निश्चयः

भीष्मः—पौत्र दुर्योधन, अस्ति मम विराटेनाप्रकाशं वैरम्। अथ भवतो यज्ञमनुभावितुमनागत इति। तस्मात् क्रियतां तस्य गोग्रहणम्।

( प्रविश्य )

भटः—महाराज, सज्जाः खलु रथा हरयश्च।

दुर्योधनः—एतैरेव रथैः शीघ्रं क्रियतां तस्य गोग्रहः।

द्रोणः—तस्माद् मे रथमानयन्तु पुरुषाः।

शकुनिः—गजो मे आनीयताम्।

कर्णः—रथो मे स्थाप्यताम्।

भीष्मः—चित्तं मे त्वरते विराटनगरं गन्तुम्। शरासनं त्वर्यताम्।

भीष्मद्रोणौ—पुत्र दुर्योधन, आवां तव युद्धे पराक्रमं द्रष्टुमिच्छावः।

दुर्योधनः—यदभिरुचितं भवद्भ्याम्।

द्रोणः—वत्स गांधारराज, एतस्मिन् गोग्रहणे तव खलु प्रथमो रथः।

शकुनिः—बाढं। प्रथमः कल्पः।

### कर्मणि प्रयोगः आज्ञार्थः

आनीयै । आनीयावहै । आनीयामहै ।

आनीयस्व । आनीयेथाम् । आनीयध्वम् ।

आनीयताम् । आनीयेताम् । आनीयन्ताम् ।

### स्वाध्यायः

**वियुज्य पदानि लिखत :—**

यज्ञमनुभवितुमनागत इति । एतैरेव । हरेश्च ।

**युक्तौ वाक्यखण्डौ योजयित्वा वाक्यानि रचयत :—**

| | |
|---|---|
| स्वप्रिया पार्वती | महापङ्के निमग्नः |
| प्रमाणपुरुषः कश्चित् | खलवचनैः दोलायते |
| चिरं पालितः नकुलः | केनापि उपायेन साध्यताम् |
| निष्क्रान्ते नृपे ग्रामः | भृत्यानां अनादरः क्रियते |
| सङ्कटानां अभावे अधिपैः | बालकरक्षणाय स्थाप्यताम् |
| पण्डितानां अपि चित्तं | परमेश्वरेण दीयताम् |
| राज्यलोभेन आकृष्टः गजः | निर्णयाय पृच्छ्यताम् |
| गजस्य मरणं | अरमणीयः संवृत्तः |

---

# षट्त्रिंशः पाठः

## टिट्टिभस्य निश्चयः

दक्षिणसमुद्रतीरे टिट्टिभः टिट्टिभी च निवसतः । प्रसववेलामासन्नां बुद्ध्वा टिट्टिभी पतिमवदत् । नाथ, प्रसवाय योग्यं स्थानं निभृतमन्विष्यताम् । स टिट्टिभीमभाषत । ननु इदमेव स्थानं प्रसवाय योग्यम् । सा वदति । एतत् स्थानमुदधेर्वेलया प्लाव्यते । टिट्टिभोऽवदत् । किमहं निर्बलो येन स्वगृहेऽवस्थि-

तमपि मामुदधेरपकरोति । टिट्टिभ्या विहस्योक्तम् । नाथ, तव




चोदधेश्च प्रभूतमन्तरम् । प्रबलेन सह स्पर्धा च विनाशायैव कल्पते । ततः टिट्टिभस्य वचनात् सा तत्रैव प्रसूता । समुद्रे-णापि टिट्टिभ्या अण्डान्यपहृतानि । तदा टिट्टिभी शोकेनाभि-भूतोच्चैराक्रोशत् । नाथ, कष्टमापतितम् । तान्यण्डानि मे नष्टानि । टिट्टिभोऽभाषत । प्रिये, मा शोकं कुरु । इत्युक्त्वा विहगानां मेलकं कृत्वा विहगाधिपतेर्गरुडस्य समीपं गतोऽभाषत च । देव, श्रूयताम् । समुद्रेणाहमपराधेन विनैवापकृतः । मम भार्याया अण्डानि तेन मम गृहादपनीतानि । ततस्तस्य वचनमाकर्ण्य गरुडेन समुद्रस्तान्यण्डानि प्रतियच्छतु इति नारायण ईश्वरो विज्ञप्तः । तस्याज्ञया समुद्रेणाण्डानि टिट्टिभ्यै समर्पितानि ।

## सन्धिविवरणम्

ननु + इदम् = नन्विदम्

प्रतियच्छतु + इति = प्रतियच्छत्विति

## ईकारान्तस्त्रीलिङ्गः " टिट्टिभी " शब्दः

| विभक्तिः | ए. व. | द्विव. | ब. व. |
|---|---|---|---|
| प्र. | टिट्टिभी | टिट्टिभ्यौ | टिट्टिभ्यः |
| द्वि. | टिट्टिभीम् | टिट्टिभ्यौ | टिट्टिभीः |
| तृ. | टिट्टिभ्या | टिट्टिभीभ्याम् | टिट्टिभीभिः |
| च. | टिट्टिभ्यै | टिट्टिभीभ्याम् | टिट्टिभीभ्यः |
| पं. | टिट्टिभ्याः | टिट्टिभीभ्याम् | टिट्टिभीभ्यः |
| ष. | टिट्टिभ्याः | टिट्टिभ्योः | टिट्टिभीनाम् |
| स. | टिट्टिभ्याम् | टिट्टिभ्योः | टिट्टिभीषु |
| सं. | टिट्टिभि | टिट्टिभ्यौ | टिट्टिभ्यः |

### स्वाध्यायः

**वियुज्य पदानि लिखत :—**

स्थानमुदधेर्वेलया । स्वगृहेऽवस्थितमपि ।
विहस्योक्तम् । विनाशायैव । अण्डान्यपहृतानि ।

**विग्रहं कुरुत :—**

समुद्रतीरे । विहगाधिपतेः । प्रसववेलाम् ।

**पूर्वकालवाचकानि धातुसाधितानि योजयत :—**

सुन्दोपसुन्दौ एषा मम इति **अवदताम्** कलहं च आरभेताम् ।
ब्राह्मणः उपकारकं नकुलं मृतं **अपश्यत्** परं विषादं च अगच्छत् ।
मण्डूकः नृपस्य समीपं **अगच्छत्** वृत्तान्तं च अकथयत् ।
सिंहः मूषिकशब्दं **शृणोति** बिडालाय आहारं च यच्छति ।
क्षेत्रपाः रासभं व्याघ्रं **मन्यन्ते** तं च न पीडयन्ति ।

---

# सप्तत्रिंशः पाठः

## सखीसंवादः




बकुलावलिका—( प्रविश्य ) आज्ञप्तास्मि देव्या धारिण्या उपदेशग्रहणे कीदृशी मालविकेति नाट्याचार्यं प्रष्टुम् । तत् तावत् सङ्गीतशालां गच्छामि । ( इति परिक्रामति )

( ततः प्रविशति द्वितीया चेटी )

बकुलावलिका—सखि कौमुदिके, कुतस्ते नन्वेषा धीरता । यत् समीपेनापि गच्छन्तीतो न पश्यसि ।

कौमुदिका—अहो बकुलावलिका । सखि, एतद् देव्या अङ्गुलीयकं निध्यायन्ती तवोपालम्भे पतितास्मि ।

बकुलावलिका—स्थाने सज्जतः खल्वीक्षणे ।

कौमुदिका—सखि, कुत्र प्रस्थितासि ।

बकुलावलिका—देव्या एव वचनेन नाट्याचार्यं प्रष्टुम् । उपदेशग्रहणे कीदृशी मालविकेति ।

कौमुदिका—( अवलोक्य ) एष नाट्याचार्यः सङ्गीतशालाया निर्गच्छति । तदेनं द्रष्टुं गच्छतु भवती । अहमप्येतदङ्गुलीयकं देव्यै यच्छामि ( इति निष्क्रान्ते )

**स्वाध्यायः**

**वियुज्य पदानि लिखत :—**

मालविकेति । नन्वेषा । तवोपालम्भे । खल्वीक्षणे ।

**वाक्यानि रचयत :—**

( पठन ) कीदृशः ( राम ) इति जनकः ( आचार्य ) पृच्छति ।

पठनसमये गोविन्दः क्रीडति । ( आचार्य ) ( उपालम्भ ) च पतति ।

समुद्रः अण्डानि ( टिट्टिभी ) यच्छति । कलहः ( दुःख ) कल्पते ।

---

# अष्टात्रिंशः पाठः

## धनलाभस्योपायः



अस्ति वाराणस्यां चूडामणिर्नाम क्षत्रियः । तेन धनलाभाय प्रभूतेन कायक्लेशेन चंद्रशेखरश्चिरमाराधितः । तत एष स्वप्ने

दर्शनं दत्त्वेशस्यादेशाद् यक्षेश्वरेणादिष्टः । यत्त्वमद्य प्रातः क्षौरं कृत्वा हस्ते लगुडं गृहीत्वा गृहद्वारे निभृतं तिष्ठ । ततो यः प्राङ्गणे भिक्षुक आगमिष्यति तं निर्दयं लगुडेन ताडय । तत एष भिक्षुकस्तत्क्षणात् सुवर्णेन पूर्णः कलशो भविष्यति । तेन त्वं यावज्जीवं सुखेन जीविष्यसि । ततस्तथानुष्ठिते तद् वृत्तम् । तच्च क्षौरकरणायानीतेन नापितेनालोक्य चिन्तितम् । अये निधिं लब्धुं निपुण एष उपायः । तन्मयाप्येवं किं न क्रियते । ततः प्रभृति स नापितः प्रत्यहं तथाविधो लगुडहस्तः सुनिभृतं भिक्षुकस्यागमनं प्रतीक्षते । एकदा तेन तथा प्राप्तो भिक्षुको लगुडेन हत्वा व्यापादितः । तस्मादपराधात् सोऽपि नापितो राजपुरुषैर्दण्डितः पञ्चत्वं गतः ।

### भविष्यत्कालः परस्मैपदम्

| | | |
|---|---|---|
| गमिष्यामि | गमिष्यावः | गमिष्यामः |
| गमिष्यसि | गमिष्यथः | गमिष्यथ |
| गमिष्यति | गमिष्यतः | गमिष्यन्ति |

### भविष्यत्कालः आत्मनेपदम्

| | | |
|---|---|---|
| ईक्षिष्ये | ईक्षिष्यावहे | ईक्षिष्यामहे |
| ईक्षिष्यसे | ईक्षिष्येथे | ईक्षिष्यध्वे |
| ईक्षिष्यते | ईक्षिष्येते | ईक्षिष्यन्ते |

### स्वाध्यायः

युक्तानि क्रियाविशेषणानि योजयतः—

रामः ———— दीपं वन्दते ।
चोरः ———— गृहं प्रविशति ।
गणदासः ———— मालविकां नाट्यं शिक्षयति ।
पङ्कमग्नः गजः ———— आक्रोशत् ।
व्याघ्राजिनेन आच्छादितः रासभः —सस्यं अभक्षयत् ।
उच्चैः, सायं, निर्भरं, प्रत्यहं, निभृतं.

# नवत्रिंशः पाठः

## मदनमहोत्सवः

( ततः प्रविशति नृपो विदूषकश्च )

नृपः—( सहर्षमवलोक्य )—सखे वसन्तक ।

विदूषकः—आज्ञापयतु देवः ।

नृपः—मदनमहोत्सवः खल्वारब्धः । पश्य, परां कोटीमारूढः प्रमोदः पौराणाम् ।

विदूषकः—सत्यमुक्तं महाराजेन । अवलोकयतु प्रियवयस्यः । एषा खलु मदनिका नृत्यन्ती लतिकया सहेत एवागच्छति ।

नृपः—( विलोक्य ) वयस्य, सम्यग्दृष्टं त्वया । मधुरैतासां क्रीडा ।

विदूषकः—( सहासम् )—भो वयस्य, अहमप्येतासां मध्ये नृत्येन गानेन च मदनमहोत्सवं संमानयिष्यामि ।

नृपः—( सस्मितम् )—मित्र, एवं क्रियताम् ।

विदूषकः—यद् देव आज्ञापयति । ( उत्थाय तयोर्मध्ये नृत्यति ) मदनिके, लतिके, एतां चर्चरीं मामपि शिक्षयत ।

मदनिका—हताश, न भवत्येषा चर्चरी ।

विदूषकः—तत्किं खल्वेतत् ।

मदनिका—( विहस्य ) हताश, द्विपदीखण्डमेतत् ।

विदूषकः—( सहर्षम् ) किमनेन खण्डेन मोदकाः क्रियन्ते लड्डुका वा ।

लतिका—( विहस्य ) हताश, नहि नहि । पठ्यते खल्वेतत् ।

विदूषकः—( सविस्मयम् ) पठ्यते खल्वेतत् । यदि पठ्यते न भुज्यते ततो ममैतेन न कार्यम् । वरं प्रियवयस्यस्य सकाशं गमिष्यामि ।

( उभे तमाकर्षतो हस्तमाकृष्य विदूषकः पलायते )

## स्वाध्यायः

| वर्तमानकालः | अनद्यतनभूतकालः | भविष्यत्कालः |
|---|---|---|
| अद्य रामः पाठं ( पठ् ) । | ह्यः रामः पाठं — । | श्वः रामः पाठं — । |
| अद्य वर्षणं ( भू ) । | ह्यः वर्षणं — । | श्वः वर्षणं — । |
| अद्य अहं सूर्यं ( ईक्ष् ) । | ह्यः अहं सूर्यं — । | श्वः अहं सूर्यं — । |
| अद्य बालौ विद्यालयं (गम्) । | ह्यः बालौ विद्यालयं — । | श्वः बालौ विद्यालयं — । |
| अद्य बालाः देवं ( वन्द् ) । | ह्यः बालाः देवं — । | श्वः बालाः देवं — । |
| अद्य शृगालः उपायं (चिन्त्) । | ह्यः शृगालः उपायं — । | श्वः शृगालः उपायं — । |
| अद्य जनकः रामाय (कुप्) । | ह्यः जनकः रामाय — । | श्वः जनकः रामाय — । |

# चत्वारिंशः पाठः

## चतुरः शशकः

अस्ति मन्दरे नाम पर्वते दुर्दान्तो नाम सिंहः । स च सर्वदा पशूनां वधं करोति । ततः सर्वैः पशुभिर्मिलित्वा सिंहो विज्ञप्तः । मृगेन्द्र, किमर्थमेकदैव बहून् पशून् व्यापादयसे । यदि प्रसादो भविष्यति तदा वयमेव तवाहारार्थं प्रत्यहमेकैकं पशुमर्पयिष्यामः ।

ततः सिंहेनोक्तम् । यद्येतदभिमतं युष्माकं तर्हि भवत्वेतत् । ततः प्रभृत्येकैकमुपकल्पितं पशुं भक्षयति । अन्यान् न व्यापादयति । अथ कदाचित् वृद्धस्य शशकस्य वारः समायातः ।

सोऽचिन्तयत् । जीविताशयैव जनो बलिष्ठेषु विनयं दर्शयति । यदि मम मरणमवश्यमेव तदा किं सिंहस्यानुनयेन । तद् मन्दं मन्दं गमिष्यामि । ततः क्षुधया पीडितः सिंहः कोपात्तमवदत् । कुतस्त्वं विलम्बादागतोऽसि । शशकोऽभाषत । प्रभो, नैष ममापराधः । अहं मार्गेऽन्येन सिंहेन बलाद् धृतः । तस्याग्रे पुनरागमनाय शपथं कृत्वा प्रभवे निवेदयितुमागतोऽस्मि । सिंहः सकोपमपृच्छत् । कुत्र तिष्ठति स दुष्टः । सत्वरं तं दर्शय । ततः शशकस्तं गृहीत्वा गभीरं कूपं गतः । अत्रागत्य स्वयमेव देवः पश्यत्वित्युक्त्वा कूपजले सिंहस्यैव प्रतिबिम्बमदर्शयत् । ततः क्रोधात् सिंहस्तस्योपर्युत्प्लुत्य विनाशं गतः ।

### उकारान्तपुंलिङ्गः 'पशु' शब्दः

| विभक्तिः | ए. व. | द्वि. व. | ब. व. |
|---|---|---|---|
| प्रथमा | पशुः | पशू | पशवः |
| द्वितीया | पशुम् | पशू | पशून् |
| तृतीया | पशुना | पशुभ्याम् | पशुभिः |
| चतुर्थी | पशवे | पशुभ्याम् | पशुभ्यः |
| पञ्चमी | पशोः | पशुभ्याम् | पशुभ्यः |
| षष्ठी | पशोः | पश्वोः | पशूनाम् |
| सप्तमी | पशौ | पश्वोः | पशुषु |
| सम्बोधनम् | पशो | पशू | पशवः |

## स्वाध्यायः

### समासान् रचयत :—

पशूनाम् नाशम् । विहगानाम् मेलकः । सिंहस्य अनुनयेन ।
भिक्षुकस्य आगमनम् । टिट्टिभस्य वचनात् ।

युक्तौ वाक्यखण्डौ योजयित्वा वाक्यानि रचयत :—

| | |
|---|---|
| सिंहे मृते पशूनां आनंदः | तस्य चरणयोः अलुठत् |
| यावत् एषः मुनिः जीवति तावत् | शृगालमार्गेण अधावत् |
| नकुलः सर्पं दृष्ट्वा स्वाभाविकवैरात् | परां कोटीं गतः |
| क्रुद्धेन चन्द्रशेखरेण | तं व्यापादयन् |
| राज्यलोभाकृष्टः सः गजः | विचारमूढयोः एतयोः पार्वती प्रदत्ता |
| ब्राह्मणं अवलोक्य नकुलः | एषा मे स्वरूपाख्या न नश्यति |

---

# एकचत्वारिंशः पाठः

## सिंहसेवको बिडालः




अस्ति कस्यांचिद् वनस्थल्यां विक्रमो नाम सिंहः । गुहायां सुप्तस्य तस्य केसरं कश्चिद् मूषकः प्रत्यहं कृन्तति । तेन दुःखितः कुपितश्च हरिराखुं ग्रहीतुं प्रयतते । परं मूषको नित्यं विवरं प्रविश्य तं वञ्चयति । तदा सिंहोऽचिन्तयत् । क्षुद्रः शत्रुर्विक्रमाद् नैव लभ्यते । तस्य सदृशं सैनिकं पुरस्कार्य स हन्यते ।

इति विचार्य तेन ग्रामं गत्वा दधिकर्णो नाम बिडाल आनीतो गुहायां च स्थापितः। प्रत्यहं स मार्जारायाहारं यच्छति। बिडाल-भयादाखुरपि बिलाद् न निःसरति। सिंहश्च सुखेन स्वपिति। तस्य केसराग्रमप्यक्षतं विद्यते। यदा यदा सिंहो मूषिकशब्दं शृणोति तदा तदा स बिडालमाहारदानेन संवर्धयति। अथैकदा क्षुधितः स मूषिको बिलाद् बहिरागतो बिडालेन भक्षितः। अनन्तरं सिंह आखोः शब्दं न कदाचिदप्यशृणोत्। बिडाल-स्याहारदाने च स मन्दोऽभवत्। आहारविरहाद् मार्जारोऽपि पञ्चत्वं गतः।

## स्वाध्यायः

### वियुज्य पदानि लिखत :—

हरिशाखुम्। बिडालभयादाखुरपि। अथैकदा। केसराग्रमप्यक्षतम्।

### समासान् रचयत :—

सिंहस्य आहारः। बिडालानां भक्षकः। आखोः विरहः।

### वाक्यविस्तारं कुरुत :—

| | | |
|---|---|---|
| क्षत्रियः | महेशं | आराधयत्। |
| टिट्टिभः | वृत्तान्तं | अकथयत्। |
| नकुलः | रावं | अशृणोत्। |

# द्वाचत्वारिंशः पाठः

## बुद्धिर्यस्य बलं तस्य

अस्ति गोदावर्यास्तीरे विशालो वटवृक्षः। तस्मिन् वायसः वायसी च निवसतः। तरोर्मूले कोटरे कृष्णसर्पो निवसति।

वायसयोरपत्यानि तेन च खादितानि । तदा प्रसूतिमासन्नामवगम्य वायसी वायसमवदत् । नाथ त्यजावैनं तरुम् । अत्र यावत् कृष्णसर्पो निवसति तावद् नावयोः संततिर्भविष्यति ।



वायसोऽभाषत । प्रिये, अलं भीत्या । वारंवारं मयैतस्यापराधः सोढः । अतः परं न सहिष्ये । वायस्यवदत् । कथमेतेन समर्थेन सह त्वं विग्रहीतुं समर्थः । वायसेनोक्तम् । अलं शङ्कया । बुद्धिर्यस्य बलं तस्य । वायस्यपृच्छत् । का तर्ह्यत्र नाथस्य बुद्धिः । वायसः प्रत्यभाषत । अत्रासन्ने तडागे राजपुत्रः प्रत्यहं स्नातुमागच्छति । स्नानसमये च कनकसूत्रं शिलायां स्थापयति । तत्त्वं चञ्चुपुटेन विधृत्यानीय सर्पस्य कोटरे स्थापय । वायस्या तथा कृतम् । ततः कनकसूत्रमन्वेष्टुमागतैः राजपुरुषैः कोटरे कृष्णसर्पो दृष्टो व्यापादितश्च ।

### सन्धिविवरणम्

आगतैः राजपुत्रैः = आगतै राजपुत्रैः

## इकारान्तस्त्रीलिंगः "भीति" शब्दः

| विभक्तिः | ए. व. | द्वि व. | ब. व. |
|---|---|---|---|
| प्रथमा | भीतिः | भीती | भीतयः |
| द्वितीया | भीतिम् | भीती | भीतीः |
| तृतीया | भीत्या | भीतिभ्याम् | भीतिभिः |
| चतुर्थी | भीतये, भीत्यै | भीतिभ्याम् | भीतिभ्यः |
| पञ्चमी | भीतेः, भीत्याः | भीतिभ्याम् | भीतिभ्यः |
| षष्ठी | भीतेः, भीत्याः | भीत्योः | भीतीनाम् |
| सप्तमी | भीतौ, भीत्याम् | भीत्योः | भीतिषु |
| सम्बोधनम् | भीते | भीती | भीतयः |

## स्वाध्यायः

**विशेषणानि योजयतः—**

——— वटवृक्षे ——— काकाः वसन्ति ।

——— नृपस्य सभायां ——— पण्डिताः सन्ति ।

——— अपि महेशेन ——— पार्वती दत्ता ।

श्रोत्रियस्य ——— पुत्रः ——— सर्पेण दष्टः ।

——— शशकः ——— सिंहं ——— कूपं अनयत् ।

**वाक्यविस्तारं कुरुतः—**

पुत्रः वस्त्राणि नयति ।

चटकः मर्कटं उपदिशति ।

भोजः ब्राह्मणाय धनं यच्छति ।

---

## त्रिचत्वारिंशः पाठः

### सुभाषितानि

विदेशेषु धनं विद्या व्यसनेषु धनं मतिः ।
परलोके धनं धर्मः शीलं सर्वत्र वै धनम् ॥ १ ॥

शैले शैले न माणिक्यं मौक्तिकं न गजे गजे ।
साधवो नहि सर्वत्र चन्दनं न वने वने ॥ २ ॥

क्षमा शस्त्रं करे यस्य दुर्जनः किं करिष्यति ।
अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ॥ ३ ॥

न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः ।
कारणेन हि जायन्ते मित्राणि रिपवस्तथा ॥ ४ ॥

पादपानां भयं वातात्पद्मानां शिशिराद्भयम् ।
पर्वतानां भयं वज्रात् साधूनां दुर्जनाद्भयम् ॥ ५ ॥

ययोरेव समं वित्तं ययोरेव समं कुलम् ।
तयोर्विवादो मैत्री च नोत्तमाधमयोः क्वचित् ॥ ६ ॥

यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् ।
एवं पुरुषकारेण विना दैवं न सिध्यति ॥ ७ ॥

सद्विद्या यदि का चिन्ता वराकोदरपूरणे ।
शुकोऽप्यशनमाप्नोति राम रामेति च ब्रुवन् ॥ ८ ॥

पण्डिते च गुणाः सर्वे मूर्खे दोषाश्च केवलाः ।
तस्मान्मूर्खसहस्रेभ्यः प्राज्ञ एको विशिष्यते ॥ ९ ॥

## चतुश्चत्वारिंशः पाठः

### नीलीभाण्डे पतितः शृगालः



अस्ति ब्रह्मारण्ये कश्चित् शृगालः । स स्वेच्छया नगरोपान्तेऽभ्रमत् । एकदा दुर्दैवात् स कस्यचिद् रजकस्य नीलीभाण्डे पतितः । पश्चात् तस्माद् निर्गन्तुमसमर्थः प्रातरात्मानं मृतवत् संदर्श्य स्थितः । अथ नीलीभाण्डाधिपतिना मृत इति बुद्ध्वा तस्मात् समुत्थाप्य दूरे नीत्वापसारितः । रजकेऽपक्रान्ते स उत्थाय पलायितः । तत एष वनं गत्वात्मानं नीलवर्णमालोक्याचिन्तयत् । अहमिदानीमुत्तमवर्णः । तस्मादात्मन उत्कर्षं किं न साधयामि । इत्यालोच्य शृगालानाहूय तेनोक्तम् । अहं भगवत्या वनदेव्या स्वहस्तेनारण्यराज्ये औषधीनां रसेनाभिषिक्तः । तदद्यारभ्यारण्येऽस्माकमाज्ञया व्यवहारं कुरुत । शृगालाश्च तस्य विशिष्टं वर्णमवलोक्य साष्टाङ्गपातं प्रणम्य

तमवदन् । यथाज्ञापयति प्रभुः । अनेनैव क्रमेण सर्वेषु पशुषु तस्याधिपत्यमभवत् । एवं तेन ज्ञातिभिरावृतेनात्मन उत्कर्षः साधितः । पश्चात् तेन व्याघ्रसिंहादीनुत्तमपरिजनान् प्राप्य सभायां शृगालानवलोक्य लज्जमानेनावज्ञया दूरीकृता बन्धवः। ततो विषण्णान् जम्बूकानवलोक्य केनचिद् वृद्धशृगालेनैतत् प्रतिज्ञातम् । मा विषीदत । यदेतेनानभिज्ञेन नीतिज्ञा मर्मज्ञा वयं स्वसमीपात् परिभूतास्तद्यथैष नश्यति तथा करवाम । यत एते व्याघ्रादयो वर्णमात्रेण विप्रलब्धाः शृगालमज्ञात्वा नृपं मन्यन्ते । तद्यथायं परिचितो भवति तथा करिष्यामः । तत्र चैवमनुतिष्ठत । यत् सर्वे संध्यासमये तस्य सन्निधौ महारावमेकदैव कुरुत । ततस्तं शब्दमाकर्ण्य जातिस्वभावात् सोऽपि शब्दं करिष्यति । यतः स्वभावो दुरतिक्रमः । ततः शब्दादभिज्ञाय तं व्याघ्रो हनिष्यति । ततस्तदनुष्ठिते तद् वृत्तम् ।

अन्नन्तः 'आत्मन्' शब्दः

| विभक्तिः | ए. व. | द्वि. | ब. व. |
|---|---|---|---|
| प्रथमा | आत्मा | आत्मानौ | आत्मानः |
| द्वितीया | आत्मानम् | आत्मानौ | आत्मनः |
| तृतीया | आत्मना | आत्मभ्याम् | आत्मभिः |
| चतुर्थी | आत्मने | आत्मभ्याम् | आत्मभ्यः |
| पञ्चमी | आत्मनः | आत्मभ्याम् | आत्मभ्यः |
| षष्ठी | आत्मनः | आत्मनोः | आत्मनाम् |
| सप्तमी | आत्मनि | आत्मनोः | आत्मसु |
| सम्बोधनम् | आत्मन् | आत्मानौ | आत्मानः |

## स्वाध्यायः

**वियुज्य पदानि लिखत :—**

इत्यालोच्य शृगालानाहूय तेनोक्तम् । शतिभिरावृतेनात्मन उत्कर्षः । महारावमेकदैव । तदद्यारभ्यारण्येऽस्माकमाज्ञया ।

**विग्रहं कुरुत :—**

नीलीभाण्डाधिपतिना । वनदेव्या ।

**विरुद्धार्थान् शब्दान् लिखत :—**

दुर्वृत्त ×
अरमणीय ×
शीघ्रम् ×
विचक्षण ×
प्रबल ×
अक्षत ×
मधुर ×
अपकारक ×
प्रिय ×

---

# पञ्चचत्वारिंशः पाठः

## नाट्याचार्ययोर्विवादः

कञ्चुकी—देव, एतौ हरदत्तगणदासौ उभौ अभिनयाचार्यौ परस्परजयेच्छया त्वां द्रष्टुमुद्यतौ ।

नृपः—प्रवेशय ।

कञ्चुकी—यदाज्ञापयति देवः । ( इति निष्क्रम्य ताभ्यां सह प्रविश्य ) एष देवः । भवन्तौ उपसर्पताम् ।

उभौ—( उपेत्य ) विजयताम् देवः ।

नृपः—स्वागतं भवद्भ्याम् । ( परिजनं विलोक्य ) आसने तावदत्रभवतोः ।

( उभौ आसनयोरुपविष्टौ )

नृपः—किमिदं शिष्योपदेशकाले आचार्याभ्यामत्रोपस्थानम् ।

गणदासः—देव, श्रूयताम् । मया तीर्थादभिनयविद्या शिक्षिता । दत्तप्रयोगश्चास्मि । देवेन देव्या च परिगृहीतः ।

नृपः—बाढम्, जाने । ततः किम् ।

गणदासः—सोऽहमेतेन हरदत्तेन प्रधानपुरुषसमक्षमेव न मे पादरेणुनापि तुल्य इत्यधिक्षिप्तः ।

हरदत्तः—देव, एष एव प्रथमं विवादकरः । अत्रभवतो मम च समुद्रपल्वलयोरिवान्तरमिति । तदत्रभवानेनं मां च शास्त्रे प्रयोगे च विमृशतु । देव एव नौ विशेषज्ञः प्राश्निकः ।

विदूषकः—समर्थं प्रतिज्ञातम् ।

गणदासः—प्रथमः कल्पः । अवहितो देवः श्रोतुमर्हति ।

नृपः—तिष्ठ तावत् । पक्षपातमत्र देवी मन्यते । तत्तस्याः समक्षमेव न्याय्यो व्यवहारः ।

विदूषकः—सुष्ठु भवान् भणति ।

आचार्यौ—यद् देवाय रोचते ।

नृपः—मौद्गल्य, एनं प्रस्तावं निवेद्य पण्डितकौशिक्या सार्ध-
माहूयतां देवी ।

कञ्चुकी—यदाज्ञापयति देवः ।

भवत् पुंलिङ्गे

| | | |
|---|---|---|
| भवान् | भवन्तौ | भवन्तः |
| भवन्तम् | भवन्तौ | भवतः |
| भवता | भवद्भ्याम् | भवद्भिः |
| भवते | भवद्भ्याम् | भवद्भ्यः |
| भवतः | भवद्भ्याम् | भवद्भ्यः |
| भवतः | भवतोः | भवताम् |
| भवति | भवतोः | भवत्सु |
| भवन् | भवन्तौ | भवन्तः |

भवत् स्त्रीलिङ्गे

भवती, भवत्यौ, भवत्यः इति टिट्टिभीवत्

सन्धिविवरणम्

हरदत्तगणदासौ + उभौ = हरदत्तगणदासावुभौ
= हरदत्तगणदासा उभौ

उभौ + अभिनयाचार्यौ = उभावभिनयाचार्यौ
= उभा अभिनयाचार्यौ

भवन्तौ + उपसर्पताम् = भवन्तावुपसर्पताम्
= भवन्ता उपसर्पताम्

उपदेशकाले + आचार्याभ्याम् = उपदेशकालयाचार्याभ्याम्
= उपदेशकाल आचार्याभ्याम्

## स्वाध्यायः

**वाक्यानि रचयत :—**

नृपपदं ( गत ) शृगालोऽवदत् मम च ( शृगाल ) च ( प्रभूत ) अन्तरम् ।
( आचार्य ) बालान् ( संस्कृतभाषा ) विमृशति ।
( वनपशु ) शृगालस्य ( आशा ) व्यवहारं कुर्वन्ति ।
टिट्टिभः ( नारायण ) परिगृहीतः ।
( बाल ) विवादो रोचते ।
( विहग ) सार्धं टिट्टिभो ( गरुड ) गतः ।

---

# षट्चत्वारिंशः पाठः

## सुभाषितानि

वरं दरिद्रः श्रुतिशास्त्रपारगो
न चापि मूर्खो बहुरत्नसंयुतः ।
सुलोचना जीर्णपटापि शोभते
न नेत्रहीना कनकैरलङ्कृता ॥ १ ॥
गिरौ मयूरा गगने पयोदा
लक्षान्तरेऽर्कश्च जलेषु पद्म ।
इन्दुर्द्विलक्षं कुमुदस्य बन्धु-
र्यो यस्य मित्रं नहि तस्य दूरम् ॥ २ ॥
सम्पूर्णकुम्भो न करोति शब्द-
मर्धो घटो घोषमुपैति नूनम् ।
प्राज्ञः कुलीनो न करोति गर्वं
जल्पन्ति मूढास्तु गुणैर्विहीनाः ॥ ३ ॥

दरिद्रता धीरतया विराजते
कुरूपता शीलतया विराजते ।
कुभोजनं चोष्णतया विराजते
कुवस्त्रता शुभ्रतया विराजते ॥ ४ ॥

हंसो विभाति नलिनीदलपुञ्जमध्ये
सिंहो विभाति गिरिगह्वरकन्दरासु ।
जात्यो विभाति तुरगो रणयुद्धमध्ये
प्राज्ञो विभाति पुरुषेषु विचक्षणेषु ॥ ५ ॥

किं कोकिलस्य विरुतेन गते वसन्ते
किं कातरस्य बहुशस्त्रपरिग्रहेण ।
मित्रेण किं व्यसनकालपराङ्मुखेन
किं जीवितेन पुरुषस्य निरक्षरेण ॥ ६ ॥

सर्पाः पिबन्ति पवनं न च दुर्बलास्ते
शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति ।
कन्दैः फलैर्मुनिवराः क्षपयन्ति कालं
सन्तोष एव पुरुषस्य परं निधानम् ॥ ७ ॥

विद्या विवादाय धनं मदाय शक्तिः परेषां परिपीडनाय ।
खलस्य साधोर्विपरीतमेतज् ज्ञानाय दानाय च रक्षणाय ॥ ८ ॥

---

## सप्तचत्वारिंशः पाठः

### व्यसनेषु ज्ञायते मित्रम्

अस्ति दण्डकारण्ये कर्पूरगौरो नाम तडागः । तत्र मन्थरो नाम कूर्मो निवसति स्म । तस्य मित्रे हिरण्यको नामाखुर्लघु-

पतनको नाम काकश्च समीप एव निवसतः। अथैकदा चित्राङ्गो नाम मृगः केनापि त्रासितस्तत्रागतः। अथ मन्थरेणोक्तम्। मृग,



स्वागतं भवते। चित्राङ्गो वदति। भवद्भिः सह सख्यमिच्छामि। हिरण्यकोऽभाषत। मैत्री तावदस्माभिः सहायत्नेन प्राप्तैव। तदत्र निर्भयं वसतु भवान्। तत् श्रुत्वा मृगः सानन्दो भूत्वाहारं कृत्वा जलं पीत्वा वृक्षस्य च्छायायामुपविष्टः। अथ मन्थरेणोक्तम्—मित्र मृग, एतस्यां निर्जनायामटव्यां केन त्रासितोऽसि। कदाचित् किं व्याधाः सञ्चरन्ति। मृगेणोक्तम्।

रुक्माङ्गदो नाम नृपः सैन्येन सह चन्द्रभागायास्तीरे वर्तते। प्रातः सोऽत्र कर्पूरगौरस्य समीपमागमिष्यतीति श्रुतं मया। तदत्रापि प्रातरवस्थानं सभयमेव। तत् श्रुत्वा कूर्मो भीत आह। अन्यं जलाशयं गच्छामि। काकमृगाववदताम्। एवमस्तु। ततो हिरण्यक आह। अन्यस्मिन् तडागे प्राप्ते मन्थरस्य कुशलम्। मार्गे तु कः प्रतीकारः। तद् मान्यत्र गच्छतु।

तद् वचनमवधीर्य भयेन विमुग्ध इव मन्थरस्तडागमुत्सृज्य चलितः । काकमृगाखवश्च तमनुगच्छन्ति । ततो मार्गे केनापि व्याधेन मन्थरः प्राप्तः । प्राप्य च गृहीत्वोत्थाप्य शरासने बद्ध्वा गृहं चलितः । तदा मन्थरस्य मित्राणि परं विषादमगच्छन् ।

हिरण्यको बहु विलप्य मृगवायसा आह । यावदेष व्याधो वनाद् न निःसरति तावद् मन्थरं मोचयितुं यत्नं करवाम । तावभाषेताम् । कार्यं वद । हिरण्यकेनोक्तम् । चित्राङ्गो जलस्य समीपं गत्वा मृतमिवात्मानं दर्शयतु । काकश्च तस्योपरि स्थित्वा चञ्चुपुटेन किमपि विलिखतु । नूनं व्याधः कूर्मं परित्यज्य मृगमांसं लब्धुं सत्वरं गमिष्यति । ततोऽहं मन्थरस्य बन्धनं कर्तिष्यामि । सन्निहिते व्याधे भवन्तौ पलायेताम् । मृगवायसाभ्यां सत्वरं गत्वा तथानुष्ठितम् । जलं पीत्वा तरोरधस्तादुपविष्टः श्रान्तो व्याधस्ता अपश्यत् । ततः कर्तरिकामादाय प्रहृष्टो मृगं प्रति चलितः । अत्रान्तरे हिरण्यकेनागत्य मन्थरस्य बन्धनं छिन्नम् । स कूर्मः सत्वरं जलं प्राविशत् । मृगो व्याधमासन्नं विलोक्य पलायितः । प्रत्यावृत्य लुब्धको यावत् तरुतलमागच्छति तावत् कूर्ममदृष्ट्वाचिन्तयत् । योग्य एष दण्डो मम । यतः

यो ध्रुवाणि परित्यज्य अध्रुवं परिषेवते ।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च ॥

### सन्धिविवरणम्

तत् + श्रुत्वा = तच् छ्रुत्वा

### स्वाध्यायः

**वियुज्य पदानि लिखत :—**

लक्षान्तरेऽर्कश्च । अथैकदा । प्रातैव । काकमृगाववदताम् । गृहीत्वोत्थाय । मृगवायसा आह । तावभाषेताम् । ता अपश्यत् ।

**समासान् रचयत :—**

मन्थरस्य मित्रम् । वृक्षस्य च्छायायाम् । चन्द्रभागायास्तीरे । मन्थरस्य बन्धनम् ।

**एतेषु वाक्येषु "भवत्" शब्दस्य रूपाणि योजयत :—**

मम पुच्छमवलम्ब्य उत्तिष्ठ ।

युवां कलहकारणं कथयेथाम् ।

सर्पविवरं यावत् यूयं मत्स्यान् विकिरत ।

किमिति चर्ममयं भिक्षापात्रं तुभ्यं रोचते ।

**एतेषु वाक्येषु "आत्मन्" शब्दस्य रूपाणि योजयत :—**

कुक्कुरो जले निजं प्रतिबिम्बमपश्यत् ।

नारायणः निजानि वस्त्राणि शिलायां न्यक्षिपत् ।

मालविका स्वकीयां सखीमवदत् ।

धीवराः स्वकीयानि जालानि जले प्रासारयन् ।

---

# अष्टाचत्वारिंशः पाठः

## सीता रामवार्तां पृच्छति

भूय एव महाशक्तिर्मारुतिर्मरुतात्मजः ।
अवदत्प्रश्रितं वाक्यं सीताप्रत्ययकारणात् ॥ १
वानरोऽहं महाभागे दूतो रामेण प्रेषितः ।
रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम् ॥ २
ततः सा ह्रीमती बाला नाथसन्देशहर्षिता ।
परितुष्टा प्रियं प्राप्य प्राशंसत्कपिपुङ्गवम् ॥ ३
विक्रान्तस्त्वं समर्थस्त्वं प्राज्ञस्त्वं वानरोत्तम ।
येनेदं राक्षसपदं त्वयैकेन प्रधर्षितम् ॥ ४
न हि त्वा प्राकृतं मन्ये वानरं वानरर्षभ ।
यस्य ते नास्ति सन्त्रासो रावणादपि सम्भ्रमः ॥ ५

कुशलो यदि काकुत्स्थः किं न सागरमेखलाम् ।
महीं दहति कोपेन युगान्ताग्निरिवोत्थितः ॥ ६
प्रभवत्यथवा रामः सुराणामपि निग्रहे ।
ममैव तु न दुःखानामस्ति मन्ये विपर्ययः ॥ ७
कच्चिन्न व्यथते रामः कच्चिन्न परितप्यते ।
उत्तराणि च कार्याणि कुरुते पुरुषोत्तमः ॥ ८
कच्चिन्न विगतस्नेहो विवासान्मयि राघवः ।
कच्चिन्मां व्यसनादस्मान्मोक्षयिष्यति राघवः ॥ ९
कौसल्यायास्तथा कच्चित्सुमित्रायास्तथैव च ।
अभीक्ष्णं श्रूयते कच्चित्कुशलं भरतस्य च ॥ १०
सीताया वचनं श्रुत्वा मारुतिर्भीमविक्रमः ।
मस्तकेऽञ्जलिमाधाय वाक्यमुत्तरमब्रवीत् ॥ ११
न त्वामिहस्थां जानीते रामः कमललोचनः ।
तेन त्वां नानयत्याशु शचीमिव पुरन्दरः ॥ १२
श्रुत्वैव वचनं मत्तः क्षिप्रमेष्यति राघवः ।
करिष्यति पुरीं लङ्कां काकुत्स्थः शान्तराक्षसाम् ॥ १३
तत्र यद्यन्तरा मृत्युर्यदि देवा महासुराः ।
मार्गे तिष्ठन्ति रामस्य स तानपि वधिष्यति ॥ १४
तवादर्शनजेनार्ये शोकेन परिपूरितः ।
न सुखं लभते रामः सिंहार्दित इव द्विपः ॥ १५
नित्यं ध्यानपरो रामो नित्यं शोकपरायणः ।
नान्यच्चिन्तयते किञ्चित् स तु स्नेहवशं गतः ॥ १६

## नवचत्वारिंशः पाठः

### मित्रविलापः

हा हतोऽस्मि। हा दग्धोऽस्मि। हा वञ्चितोऽस्मि। हा किमिदमापतितम्। किं वृत्तम्। हा धर्म, निष्परिग्रहोऽसि। हा तपस्ये, निराश्रयासि। हा सरस्वति, विधवासि। हा सत्य, अनाथमसि। हा सुरलोक, शून्योऽसि। मित्र, प्रतिपालय माम्। अहमपि भवन्तमनुयास्यामि। न शक्नोमि भवन्तं विना क्षणमप्यवस्थातुम्। कथमपरिचित इवादृष्टपूर्व इवाद्य मामेकपद उत्सृज्य गच्छसि। कुतस्तवैषा निष्ठुरता। कथय, त्वदृते क्व गच्छामि। कं शरणमुपगच्छामि। अन्धोऽस्मि संवृत्तः। शून्या मे दिशा जाताः। निरर्थकं जीवितम्। अप्रयोजना तपस्या। निःसुखाश्च लोकाः। केन सह परिभ्रमामि। कमालपामि। केन वार्तां करोमि। उत्तिष्ठ त्वम्। यच्छ मे प्रतिवचनम्। क्व सा ममोपरि प्रीतिः। क्व तत् स्मितपूर्वं भाषणं च।

---

## पञ्चाशः पाठः

### कूटानि

युधिष्ठिरः कस्य पुत्रो गङ्गा वहति कीदृशी।
हंसस्य शोभा का वास्ति धर्मस्य त्वरिता गतिः॥ १॥
भोजनान्ते च किं पेयं जयन्तः कस्य वै सुतः।
कथं विष्णुपदं प्रोक्तं तक्रं शक्रस्य दुर्लभम्॥ २॥

का पाण्डुपत्नी गृहभूषणं किं को रामशत्रुः किमगस्त्यजन्म ।
कः सूर्यपुत्रो विपरीतपृच्छा कुन्तीसुतो रावणकुम्भकर्णाः ॥३॥
केशवं पतितं दृष्ट्वा द्रोणो हर्षमुपागतः ।
रुदन्ति कौरवाः सर्वे हा केशव कथं गतः ॥ ४ ॥
तातेन कथितं पुत्र लेखं लिख ममाज्ञया ।
न तेन लिखितो लेखः पितुराज्ञा न लोपिता ॥ ५ ॥



# शब्दसूच्यां प्रयुक्ताः संक्षेपाः

अ. – अव्ययम्

आ. – आत्मनेपदम्

उ. – उभयपदे

क्रि. – क्रियापदम्

तु. – तुमन्तम्

न. – नपुंसकलिङ्गं नाम

प. – परस्मैपदम्

पु. – पुंलिङ्गं नाम

पू. अ. – पूर्वकालवाचकं धातुसाधितं अव्ययम्

प्र. – प्रयोजकधातुः

ब.व. – बहुवचनम्

भू. वि. – भूतकालवाचकं धातुसाधितं विशेषणम्

वि. – विशेषणम्

स. – सर्वनाम

स्त्री. – स्त्रीलिङ्गं नाम

# शब्दसूचिः

| | |
|---|---|
| अकीर्तिकर | वि. |
| अक्षत | वि. |
| अक्षम | वि. |
| अग्निः | पु. |
| अग्रम् | न. |
| अङ्कित | वि. |
| अङ्गुलीयकम् | न. |
| अजिनम् | न. |
| अज्ञ | वि. |
| अज्ञात्वा | पू. अ. |
| अञ्जलिः | पु. |
| अटवी | स्त्री. |
| अण्डम् | न. |
| अतः | अ. |
| अतिजीर्णता | स्त्री. |
| अतिवल्लभ | वि. |
| अतिविशाल | वि. |
| अतीव | अ. |
| अतृण | वि. |
| अत्र | अ. |
| अत्रभवत् | स. |
| अथ | अ. |
| अदर्शनज | वि. |
| अदृष्टपूर्व | वि. |
| अदृष्ट्वा | पू. अ. |
| अद्य | अ. |
| अधन | वि. |
| अधम | वि. |
| अधः | अ. |
| अधस्तात् | अ. |
| अधिगम् ( गच्छ् ) | १ प. |
| अधिक्षिप्त | भू. वि. |
| अधिपः | पु. |
| अधिपतिः | पु. |
| अधिष्ठानम् | न. |
| अधीर | वि. |
| अधुना | अ. |
| अध्ययनम् | न. |
| अध्रुव | वि. |
| अनतिदूर | वि. |
| अनन्तरम् | अ. |
| अनभिज्ञ | वि. |
| अनागत | भू. वि. |
| अनाथ | वि. |
| अनादरः | पु. |
| अनिष्ट | वि. |
| अनुनयः | पु. |
| अनुभू | १ प. |
| अनुया | २ प. |
| अनुस्था ( तिष्ठ् ) | १ प. |
| अनुष्ठित | भू. वि. |
| अनेकदा | अ. |
| अन्तः | पु. |
| अन्तरम् | न. |
| अन्तरा | अ. |
| अन्ध | वि. |
| अन्य | वि. |
| अन्यत्र | अ. |
| अन्यथा | अ. |
| अन्येद्युः | अ. |
| अन्योन्य | वि. |
| अन्विष् | ४ प. |
| अन्वेषणम् | न. |
| अन्वेष्टुम् | तु. |
| अपकृ | ८ उ. |
| अपकृत | भू. वि. |
| अपक्रान्त | भू. वि. |
| अपगम् ( गच्छ् ) | १ प. |
| अपत्यम् | न. |
| अपनीत | भू. वि. |
| अपराधः | पु. |
| अपरिचित | भू. वि. |
| अपसारित | भू. वि. |
| अपहृत | भू. वि. |
| अपायः | पु. |
| अपि | अ. |
| अप्रकाश | वि. |

| | |
|---|---|
| अप्रयोजन | वि. |
| अभावः | पु. |
| अभिज्ञाय | पू. अ. |
| अभिनयः | पु |
| अभिभूत | भू. वि. |
| अभिमत | भू. वि. |
| अभिरुचित | भू. वि. |
| अभिषिक्त | भू. वि. |
| अभिषेक्तुम् | तु. |
| अभिहित | भू. वि. |
| अभीक्ष्णम् | अ. |
| अमात्यः | पु. |
| अमित्र | वि. |
| अमित्रः | पु. |
| अम्ल | वि. |
| अय् | १ आ. |
| अयत्नः | पु. |
| अये | अ. |
| अरण्यम् | न. |
| अरमणीय | वि. |
| अरे | अ. |
| अर्कः | पु. |
| अर्थः | पु. |
| अर्दित | भू. वि. |
| अर्ध | वि. |
| अर्पय् | प्र. |
| अर्ह् | १ प. |
| अलङ्कृत | भू. वि. |
| अलम् | अ. |
| अलस | वि. |
| अवगम् ( गच्छ ) | १ प. |
| अवगम्य | पू. अ. |
| अवगाह् | १ आ. |
| अवज्ञा | स्त्री. |
| अवधार्य | पू. अ. |
| अवधीर्य | पू. अ. |
| अवमन् | ४ आ. |
| अवलम्ब्य | पू. अ. |
| अवलोकय् | प्र. |
| अवश्य | वि. |
| अवस्थातुम् | तु. |
| अवस्थानम् | न. |
| अवस्थाप्य | पू. अ. |
| अवस्थित | भू. वि. |
| अवहित | भू. वि. |
| अविद्य | वि. |
| अविवेकः | पु. |
| अनन्यम् | न. |
| अशनम् | न. |
| अष्टम | वि. |
| अष्टाचत्वारिंश | वि. |
| अष्टात्रिंश | वि. |
| अष्टादश | वि. |
| अष्टाविंश | वि. |
| अस् | २ प. |
| असमर्थ | वि. |
| असमाप्त | भू. वि. |
| असुरः | पु. |
| अस्मद् | स. |
| अहर्निशम् | अ. |
| आकर्ण्य | पू. अ. |
| आकाशम् | न. |
| आकृष् ( कर्ष् ) | १ प. |
| आकृष्ट | भू. वि. |
| आकृष्य | पू. अ. |
| आक्रुश् ( क्रोश् ) | १ प. |
| आक्षिप् | ६ उ. |
| आखुः | पु. |
| आगत | भू. वि. |
| आगत्य | पू. अ. |
| आगम् ( गच्छ् ) | १ प. |
| आगमनम् | न. |
| आचार्यः | पु. |
| आच्छाद्य | भू. अ. |
| आज्ञप्त | भू. वि. |
| आज्ञा | स्त्री. |
| आज्ञापय् | प्र. |
| आज्ञार्थः | पु. |
| आतपः | पु. |
| आत्मजः | पु. |
| आत्मन् | पु. |
| आत्मनेपदम् | न. |
| आदा ( यच्छ् ) | १ प. |
| आदातुम् | तु. |
| आदिः | पु. |
| आदिष्ट | भू. वि. |
| आदेशः | पु. |

| | | | | | |
|---|---|---|---|---|---|
| आधाय | पू. अ. | इ | २ प. | उत्सवः | पु. |
| आधिपत्यम् | न. | इच्छा | स्त्री. | उत्सुक | वि. |
| आनी | १ प. | इतः | अ. | उत्सृज्य | पू. अ. |
| आनीत | भू. वि. | इति | अ. | उदधिः | पु. |
| आनीय | पू. अ. | इत्यादि | वि. | उदरम् | न. |
| आप् | ५ प. | इदम् | स. | उद्घाटय् | प्र. |
| आपगा | स्त्री. | इदानीम् | अ. | उद्यत | भू. वि. |
| आपतित | भू. वि. | इन्दुः | पु. | उद्यम | पु. |
| आरब्ध | भू. वि. | इष् ( इच्छ् ) | ६ प. | उद्यानम् | न. |
| आरभ् | १ आ. | इहस्थ | वि. | उन्मत्त | भू. वि. |
| आरभ्य | पू. अ. | ईक्ष् | १ आ. | उपकल्पित | भू. वि. |
| आराधित | भू. वि. | ईक्षणम् | न. | उपकारक | वि. |
| आरुह् ( रोह् ) | १ प. | ईशः | पु. | उपक्रीय | पू. अ. |
| आरूढ | भू. वि. | ईश्वरः | पु. | उपगत | भू. वि. |
| आर्य | वि. | उक्त | भू. वि. | उपगम् ( गच्छ् ) | १ प. |
| आलप् | १ प. | उक्त्वा | पू. अ. | उपगम्य | पू. अ. |
| आलोक्य | पू. अ. | उचित | वि. | उपदेश | पु. |
| आलोच्य | पू. अ. | उच्चैः | अ. | उपद्रवः | पु. |
| आवश्यकता | स्त्री. | उत्कर्षः | पु. | उपधाव् | १ प. |
| आवृ | ५ उ. | उत्तम | वि. | उपयोगः | पु. |
| आशा | स्त्री | उत्तर | वि. | उपरि | अ. |
| आशु | अ. | उत्तरम् | न. | उपविश् | ६ प. |
| आसनम् | न. | उत्तरीयम् | न. | उपविष्ट | भू. वि. |
| आसन्न | भू. वि. | उत्था ( तिष्ठ् ) | १ प. | उपशम् ( शाम् ) | ४ प. |
| आह | क्रि. | उत्थाप्य | पू. अ. | उपसृत्य | पू. अ. |
| आहारः | पु. | उत्थाय | पू. अ. | उपसृप् ( सर्प् ) | १ प. |
| आहूत | भू. वि. | उत्थित | भू. वि. | उपस्थानम् | न. |
| आहूय | पू. अ. | उत्पत् | १ प. | उपस्थित | भू. वि. |
| आह्वे ( ह्वय् ) | १ प. | उत्प्लुत्य | पू. अ. | उपागत | भू. वि. |

| | |
|---|---|
| उपान्तः | पु. |
| उपालम्भः | पु. |
| उपायः | पु. |
| उपेत | भू. वि. |
| उपेत्य | पू. अ. |
| उपैति | क्रि. |
| उभ | स. |
| उष्णता | स्त्री. |
| ऊर्ध्वम् | अ. |
| ऋते | अ. |
| ऋषभः | पु. |
| ऋषिः | पु. |
| एक | वि. |
| एकचत्वारिंश | वि. |
| एकत्रिंश | वि. |
| एकदा | अ. |
| एकविंश | वि. |
| एकादश | वि. |
| एकैक | वि. |
| एतद् | स. |
| एव | अ. |
| एवम् | अ. |
| औषधिः | स्त्री. |
| कम् | न. |
| कच्चित् | अ. |
| कञ्चुकिन् | पु. |
| कण्ठः | पु. |
| कति | स. |
| कतिपय | वि. |

| | |
|---|---|
| कथ् | १० उ. |
| कथम् | अ. |
| कथित | भू. वि. |
| कदाचित् | अ. |
| कनकम् | न. |
| दः | पु. |
| दरा | स्त्री. |
| [redacted]पः | पु. |
| लम् | न. |
| ः | पु. |
| ाः | पु. |
| [redacted]रिका | स्त्री. |
| [redacted]रिप्रयोगः | पु. |
| णिप्रयोगः | पु. |
| शः | पु. |
| हः | पु. |
| पः | पु. |
| म् | अ. |
| कः | पु. |
| कुस्थः | पु. |
| ण्डः | पु. |
| तर | वि. |
| न्त | वि. |
| यः | पु. |
| र | वि. |
| रणम् | न. |
| र्यम् | न. |
| लः | पु. |
| मु् | स. |

| | |
|---|---|
| किम् | अ. |
| किमर्थम् | अ. |
| कियत् | वि. |
| किल | अ. |
| कीदृश | वि. |
| कुक्कुरः | पु. |
| कुतः | अ. |
| कुत्रचित् | अ. |
| कुप् | ४ प. |
| कुपित | भू वि. |
| कुभोजनम् | न. |
| कुमुदम् | न. |
| कुम्भः | पु. |
| कुरूपता | स्त्री. |
| कुलम् | न. |
| कुलीन | वि. |
| कुवस्त्रता | स्त्री. |
| कुशल | वि. |
| कुशलम् | न. |
| कूटम् | न. |
| कूपः | पु. |
| कूर्मः | पु. |
| कृ | ८ उ. |
| कृत् ( कृन्त् ) | ६ प. |
| कृत | भू. वि. |
| कृत्वा | पू. अ. |
| कृष्ण | वि. |
| क्लृप् ( कल्प् ) | १ आ. |
| केवल | वि. |

| | |
|---|---|
| केवलम् | अ. |
| केसरः | पु. |
| कोटरम् | न. |
| कोटी | स्त्री. |
| कोपः | पु. |
| कौरवः | पु. |
| कौतुकम् | न. |
| क्रम् | १ आ. |
| क्रमः | पु. |
| क्रमशः | अ. |
| क्रियापदम् | न. |
| क्रियाविशेषणम् | न. |
| क्रीड् | १ प. |
| क्रीडनम् | न. |
| क्रुद्ध | भू. वि. |
| क्रोडः | पु. |
| क्रोधः | पु. |
| क्रोशः | पु. |
| क्लेशः | पु. |
| क्व | अ. |
| क्वचित् | अ. |
| क्षणः | पु. |
| क्षत्रियः | पु. |
| क्षपय् | प्र. |
| क्षमा | स्त्री. |
| क्षिप् | ६ उ. |
| क्षिप्रम् | अ. |
| क्षुद्र | वि. |
| क्षुधा | स्त्री. |
| क्षुधित | वि. |
| क्षेत्रम् | न. |
| क्षेत्रपः | पु. |
| क्षौरकरणम् | न. |
| खण्डः | पु. |
| खण्डित | वि. |
| खलु | अ. |
| खलः | पु. |
| खाद् | १ प. |
| खादित | भू. वि. |
| गगनम् | न. |
| गच्छन्ती | स्त्री. |
| गणः | पु. |
| गजः | पु. |
| गत | भू. वि. |
| गतिः | स्त्री. |
| गत्वा | पू. अ. |
| गन्तुम् | तु. |
| गभीर | वि. |
| गम् ( गच्छ् ) | १ प. |
| गरुडः | पु. |
| गर्दभः | पु. |
| गर्वः | पु. |
| गह्वरम् | न. |
| गानम् | न. |
| गाह् | - आ. |
| गिरिः | पु. |
| गुणः | पु. |
| गुहा | स्त्री. |
| गृहम् | न. |
| गृहीत | भू. वि. |
| गृहीत्वा | पू. आ. |
| घटः | पु. |
| घर्षणम् | न. |
| घातः | पु. |
| घासः | पु. |
| घृष् ( घर्ष् ) | १ प. |
| घोषः | पु. |
| च | अ. |
| चक्रम् | न. |
| चञ्चुपुटम् | न. |
| चटकः | पु. |
| चतुर | वि. |
| चतुर्थ | वि. |
| चतुर्दश | वि. |
| चतुर्विंश | वि. |
| चतुश्चत्वारिंश | वि. |
| चतुष्टयम् | न. |
| चतुस्त्रिंश | वि. |
| चत्वारिंश | वि. |
| चन्दनम् | न. |
| चन्द्रः | पु. |
| चर् | १ प. |
| चरणः | पु. |
| चर्चरी | स्त्री. |
| चर्चा | स्त्री. |
| चर्ममय | वि. |
| चलनम् | न. |

| | | | | | |
|---|---|---|---|---|---|
| चलित | भू. वि. | जालम् | न. | ताम्रम् | न. |
| चलितुम् | तु. | जीर्ण | भू. वि. | तावत् | अ. |
| चित्तम् | न. | जीव् | १ प. | तीरः | पु. |
| चिन्त् | १० उ. | जीवः | पु. | तीर्थम् | न. |
| चिन्तनम् | न. | जीवितम् | न. | तु | अ. |
| चिन्ता | स्त्री. | ज्ञा | ९ उ. | तुमन्तम् | न. |
| चिन्तित | भू. वि. | ज्ञातिः | पु. | तुरगः | पु. |
| चिरम् | अ. | ज्ञात्वा | पू. अ. | तुल्य | वि. |
| चीत्कारः | पु. | ज्ञानम् | न. | तुष् | ४ प. |
| चेटी | स्त्री. | टिट्टिभः | पु. | तृणम् | न. |
| चोरः | पु. | टिट्टिभी | स्त्री. | तृतीय | वि. |
| चौरः | पु. | तक्रम् | न. | तृष्णा | स्त्री. |
| छागः | पु. | तड् ( ताड् ) | १० उ. | त्यक्त | भू. वि. |
| छाया | स्त्री. | तडागः | पु. | त्यज् | १ प. |
| छिन्न | भू. वि. | ततः | अ. | त्रयम् | न. |
| जन् ( जा ) | ४ आ. | तत्र | अ. | त्रयस्त्रिंश | वि. |
| जनः | पु. | तथा | अ. | त्रयोदश | वि. |
| जनकः | पु. | तथापि | अ. | त्रयोविंश | वि. |
| जन्मन् | न. | तथाविध | वि. | त्रासय् | प्र. |
| जम्बूकः | पु. | तद् | अ. | त्रासित | भू. वि. |
| जयः | पु. | तद् | स. | त्रि | वि. |
| जलम् | न. | तदा | अ. | त्रिंश | वि. |
| जलाशयः | पु. | तपस्या | स्त्री. | त्रिचत्वारिंश | वि. |
| जल्प् | १ प. | तपोबलम् | न. | त्रैलोक्यम् | न. |
| जागरय् | प्र. | तपोवनम् | न. | त्वद्दते | अ. |
| जागरित | भू. वि. | तरुः | पु. | त्वर् | १ आ. |
| जात | भू. वि. | तातः | पु. | त्वरित | भू. वि. |
| जातिः | स्त्री. | तादृश | वि. | दक्षिण | वि. |
| जात्य | वि. | तापसः | पु. | दग्ध | भू. वि. |

| | | | | | |
|---|---|---|---|---|---|
| दण्डः | पु. | दुर्भिक्षः | पु. | द्विजः | पु. |
| दण्डित | भू. वि. | दुर्लभ | वि. | द्वितीय | वि. |
| दत्त | भू. वि. | दुर्वृत्त | वि. | द्विपः | पु. |
| दत्त्वा | पू. अ. | दुष्ट | वि. | द्विपदी | स्त्री. |
| दरिद्र | वि. | दूतः | पु. | धनम् | न. |
| दरिद्रता | स्त्री. | दूरम् | न. | धन्य | वि. |
| दर्पणः | पु. | दूरीकृत | वि. | धर्मः | पु. |
| दर्शनम् | न. | दृढम् | अ. | धातुः | पु. |
| दर्शय् | प्र. | दृश् ( पश्य् ) | १ प. | धातुमय | वि. |
| दलम् | न. | दृष्ट | भू. वि. | धातुसाधित | वि. |
| दशम | वि. | दृष्टिः | स्त्री. | धाव् | १ प. |
| दष्ट | भू. वि. | दृष्टिपातः | पु. | धीरता | स्त्री. |
| दह् | १ प. | दृष्ट्वा | पू. अ. | धीवरः | पु. |
| दा ( यच्छ् ) | १ प. | देवः | पु. | धूर्त | वि. |
| दानम् | न. | देवता | स्त्री. | धृ ( धार् ) | १० उ. |
| दानपत्रम् | न. | देवी | स्त्री. | धृत | भू. वि. |
| दारिद्र्यम् | न. | देशः | पु. | ध्यानम् | न. |
| दारुण | वि. | देहः | पु. | ध्रुव | वि. |
| दाहः | पु. | दैत्यः | पु. | न | अ. |
| दिनम् | न. | दैवम् | न. | नकुलः | पु. |
| दिशा | स्त्री. | दोलाय् | १० आ. | नक्षत्रम् | न. |
| दीन | वि. | दोषः | पु. | नगरम् | न. |
| दीपकः | पु. | द्रोणः | पु. | ननु | अ. |
| दुःखम् | न. | द्वाचत्वारिंश | वि. | नपुंसकलिङ्गम् | न. |
| दुःखित | वि. | द्वात्रिंश | वि. | नम् | १ प. |
| दुरतिक्रम | वि. | द्वादश | वि. | नयनम् | न. |
| दुर्जनः | पु. | द्वारम् | न. | नरः | पु. |
| दुर्दैवम् | न. | द्वाविंश | वि. | नलिनी | स्त्री. |
| दुर्बल | वि. | द्वि | वि. | नवचत्वारिंश | वि. |

| | | | | | |
|---|---|---|---|---|---|
| नवदश | वि. | निरक्षर | वि. | नीच | वि. |
| नवम | वि. | निरर्थक | वि. | नीत | भू. वि. |
| नवविंश | वि. | निराश्रय | वि. | नीतिज्ञ | वि. |
| नश् | ४ प. | निरीक्ष्य | पू. अ. | नीत्वा | पू. अ. |
| नष्ट | भू. वि. | निरूपित | भू. वि. | नील | वि. |
| नाहि | अ. | निर्गल | भू. वि. | नीली | स्त्री. |
| नाट्यम् | न. | निर्गन्तुम् | तु. | नूनम् | अ. |
| नापितः | पु. | निर्गम् ( गच्छ् ) | १ प. | नृत् | ४ प. |
| नाम | अ. | निर्जन | वि. | नृत्यम् | न. |
| नामन् | न. | निर्णयः | पु. | नृत्यन्ती | स्त्री. |
| नाशः | पु. | निर्दयम् | अ. | नृपः | पु. |
| नाशय् | प्र. | निर्बल | वि. | नृपतिः | पु. |
| निक्षिप् | ६ उ. | निर्भयम् | अ. | नृशंस | वि. |
| निक्षिप्त | भू. वि. | निर्भर | वि. | नेत्रम् | न. |
| निक्षेपणम् | न. | निर्भरम् | अ. | न्यग्रोधः | पु. |
| निग्रहः | पु. | निवस् | १ प. | न्याय्य | वि. |
| निज | वि. | निवेदयितुम् | तु. | पक्षः | पु. |
| नित्यम् | अ. | निवेद्य | पू. अ. | पक्षपातः | पु. |
| निद्रा | स्त्री. | निशा | स्त्री. | पङ्कः | पु. |
| निद्रित | वि. | निश्चयः | पु. | पञ्चचत्वारिंश | वि. |
| निन्द् | १ प. | निश्चित | वि. | पञ्चत्रिंश | वि. |
| निधानम् | न. | निश्चित्य | पू. अ. | पञ्चत्वम् | न. |
| निधिः | पु. | निष्क्रम्य | पू. अ. | पञ्चदश | वि. |
| निध्यायन्ती | स्त्री. | निष्क्रान्त | भू. वि. | पञ्चम | वि. |
| निपुण | वि. | निष्ठुरता | स्त्री. | पञ्चविंश | वि. |
| निभृत | वि. | निष्परिग्रह | वि. | पञ्चाश | वि. |
| निभृतम् | अ. | निस्सुख | वि. | पठ् | १ प. |
| निमस्ज् ( मज्ज् ) | ६ प. | निस्सृ ( सर् ) | १ प. | पण्डित | वि. |
| नियोगः | पु. | नी ( नय् ) | १ प. | पत् | १ प. |

| | |
|---|---|
| पतिः | पु. |
| पतित | भू. वि. |
| पत्नी | स्त्री. |
| पत्रम् | न. |
| पथिकः | पु. |
| पदम् | न. |
| पद्मन् | न. |
| पयोदः | पु. |
| पर | वि. |
| परम् | अ. |
| परलोकः | पु. |
| परस्पर | वि. |
| पराक्रम | पु. |
| पराङ्मुख | वि. |
| परायण | वि. |
| परार्थ | वि. |
| परिक्रम् ( क्राम् ) | १ प. |
| परिगृहीत | भू. वि. |
| परिग्रहः | पु. |
| परिचित | भू. वि. |
| परिजनः | पु. |
| परितप् | १ प. |
| परितुष्ट | भू. वि. |
| परित्यक्तुम् | तु. |
| परित्यज् | १ प. |
| परिपीडनम् | न. |
| परिपूरित | भू. वि. |
| परिभूत | भू. वि. |
| परिभ्रम् | १ प. |

| | |
|---|---|
| परिषेव् ( सेव् ) | १ आ. |
| परिसमाप्त | भू. वि. |
| परेद्युः | अ. |
| पर्जन्यः | पु. |
| पलाय् | १ आ. |
| पलायित | भू. वि. |
| प्लवङ्गः | पु. |
| पवनः | पु. |
| पशुः | पु. |
| पश्चात् | अ. |
| पा ( पिब् ) | १ प. |
| पाठः | पु. |
| पात्रम् | न. |
| पादः | पु. |
| पादपः | पु. |
| पाप | वि. |
| पारग | वि. |
| पारितोषिकम् | न. |
| पार्वण | वि. |
| पालित | भू. वि. |
| पाषाणः | पु. |
| पिता | पु. |
| पीड् | १० उ. |
| पीडित | भू. वि. |
| पीत्वा | पू. अ. |
| पीन | वि. |
| पुंलिङ्ग | वि. |
| पुङ्गवः | पु. |
| पुच्छम् | न. |

| | |
|---|---|
| पुञ्जः | पु. |
| पुत्रः | पु. |
| पुनः | अ. |
| पुरन्दरः | पु. |
| पुरस्कार्य | पू. अ. |
| पुरा | अ. |
| पुरी | स्त्री. |
| पुरीषोत्सर्गः | पु. |
| पुरुषः | पु. |
| पुरुषकारः | पु. |
| पुस्तकम् | न. |
| पूज् | १० उ. |
| पूज्य | वि. |
| पूरणम् | न. |
| पूर्ण | भू. वि. |
| पूर्वकालवाचक | वि. |
| पृच्छा | स्त्री. |
| पृष्ट | भू. वि. |
| पृष्ठम् | न. |
| पेय | वि. |
| पौत्रः | पु. |
| पौरः | पु. |
| प्रकाश् | १ आ. |
| प्रच्छ् ( पृच्छ् ) | ६ प. |
| प्रज्ञा | स्त्री. |
| प्रणम्य | पू. अ. |
| प्रति | अ. |
| प्रतिज्ञात | भू. वि. |
| प्रतिदा ( यच्छ् ) | १ प. |

| | |
|---|---|
| प्रतिनिवृत्त | भू. वि. |
| प्रतिपद् | ४ आ. |
| प्रतिपालय् | प्र. |
| प्रतिबिम्बम् | न. |
| प्रतिभाष् | १ आ. |
| प्रतिवचनम् | न. |
| प्रतिवस् | १ प. |
| प्रतीकारः | पु. |
| प्रतीक्ष् | १ आ. |
| प्रतीक्ष्य | पू. अ. |
| प्रत्ययः | पु. |
| प्रत्यहम् | अ. |
| प्रथम | वि. |
| प्रथमम् | अ. |
| प्रदत्त | भू. वि. |
| प्रदानम् | न. |
| प्रदोषः | पु. |
| प्रधर्षित | भू. वि. |
| प्रधान | वि. |
| प्रबल | वि. |
| प्रबुद्ध | भू. वि. |
| प्रभातः | पु. |
| प्रभावः | पु. |
| प्रभुः | पु. |
| प्रभू ( भव् ) | १ प. |
| प्रभूत | वि. |
| प्रभृति | अ. |
| प्रमाणम् | न. |
| प्रमोदः | पु. |
| प्रयत् | १ आ. |
| प्रयत्नः | पु. |
| प्रयोगः | पु. |
| प्रयोगान्तरम् | न. |
| प्रयोजनम् | न. |
| प्रविश् | ६ प. |
| प्रविश्य | पू. अ. |
| प्रविष्ट | भू. वि. |
| प्रवेशय् | प्र. |
| प्रशंस् | १ प. |
| प्रश्नः | पु. |
| प्रश्रित | वि. |
| प्रष्टुम् | तु. |
| प्रसवः | पु. |
| प्रसादः | पु. |
| प्रसारय् | प्र. |
| प्रसूत | भू. वि. |
| प्रसूतिः | स्त्री. |
| प्रस्तावः | पु. |
| प्रस्थित | भू. वि. |
| प्रस्रवणम् | न. |
| प्रहारः | पु. |
| प्रहृष्ट | भू. वि. |
| प्राकृत | वि. |
| प्राङ्गणम् | न. |
| प्राज्ञः | पु. |
| प्राणाः ( ब. व. ) | पु. |
| प्रातः | अ. |
| प्राप्त | भू. वि. |
| प्राप्य | पू. अ. |
| प्रारब्ध | भू. वि. |
| प्रार्थ् | १० आ. |
| प्राश्निकः | पु. |
| प्रिय | वि. |
| प्रीतिः | स्त्री. |
| प्रेक्ष् | १ आ. |
| प्रेषित | भू. वि. |
| प्रोक्त | भू. वि. |
| प्लावय् | प्र. |
| फलम् | न. |
| फलकः | पु. |
| बकः | पु. |
| बद्ध्वा | पू. अ. |
| बन्धनम् | न. |
| बन्धुः | पु. |
| बलम् | न. |
| बलिन् | वि. |
| बलिष्ठ | वि. |
| बहिः | अ. |
| बहु | अ. |
| बहु | वि. |
| बाढम् | वि. |
| बान्धवः | पु. |
| बालः | पु. |
| बालकः | पु. |
| बाला | स्त्री. |
| बालापत्यम् | न. |
| बिडालः | पु. |

| | | | | | |
|---|---|---|---|---|---|
| बिलम् | न. | भू ( भव् ) | १ प. | मनोरथः | पु. |
| बुद्धिः | स्त्री | भूतकालः | पु. | मन्द | वि. |
| बुद्ध्वा | पू. अ. | भूत्वा | पू. अ. | मन्दम् | अ. |
| बुध् ( बोध् ) | १ प. | भूपतिः | पु. | मन्दभाग्य | वि. |
| ब्राह्मणः | पु. | भूयः | अ | मयूरः | पु. |
| ब्रुवत् | वि. | भूषणम् | न. | मरणम् | न. |
| भक्ष् | १० उ. | भृत्यः | पु. | मरुतः | पु. |
| भक्षणम् | न. | भृश | वि. | मर्कटः | पु. |
| भक्षयितुम् | तु. | भृशम् | अ. | मर्मज्ञ | वि. |
| भक्षित | भू. वि. | भेकः | पु. | मस्तकम् | न. |
| भगवती | स्त्री. | भोः | अ. | महाप्रसादः | पु. |
| भङ्गः | पु. | भोजनम् | न. | महाभाग | वि. |
| भण् | १ प. | भ्रंश् | १ आ. | महाराजः | पु. |
| भद्रः | पु. | भ्रम् | १ प. | मही | स्त्री. |
| भयम् | न. | भ्रष्ट | भू. वि | महेशः | पु. |
| भवत् | स. | मग्न | भू. वि. | महोत्सवः | पु. |
| भविष्यत्कालः | पु. | मण्डूकः | पु. | मा | अ. |
| भागः | पु. | मतिः | स्त्री. | माणिक्यम् | न. |
| भाण्डम् | न. | मतिप्रकर्षः | पु. | मात्र | वि. |
| भार्या | स्त्री. | मत्तः | अ. | मार्गः | पु. |
| भाष् | १ आ. | मत्वा | पू. अ. | मार्जारः | पु. |
| भाषणम् | न. | मत्स्यः | पु. | मासः | पु. |
| भिक्षा | स्त्री | मदः | पु. | मांसम् | न. |
| भिक्षुकः | पु. | मदनः | पु. | मित्रम् | न. |
| भी ( बिभेति ) | ३ उ. | मधुर | वि. | मिलित्वा | पू. अ. |
| भीत | भू. वि. | मधुरम् | अ. | मुखम् | न. |
| भीतिः | स्त्री. | मध्यम् | न. | मुनिः | पु. |
| भीम | वि. | मध्यस्थ | वि. | मुहुः | अ. |
| भुज् | ७ उ. | मन् | ४ आ. | मूढ | वि. |

| | | | | | |
|---|---|---|---|---|---|
| मूर्ख | वि. | यावत् | अ. | रावणः | पु. |
| मूलम् | न. | युक्त | वि. | रासभः | पु. |
| मूषकः | पु. | युगम् | न. | रिपुः | पु. |
| मूषिकः | पु. | युद्धम् | न. | रुच् ( रोच् ) | १ आ. |
| मृ ( म्रिय् ) | ६ आ. | युष्मद् | स. | रुद् | २ प. |
| मृगः | पु. | योग्य | वि. | रूपम् | न. |
| मृगया | स्त्री. | योजय् | प्र. | रे | अ. |
| मृगेन्द्रः | पु. | योजयित्वा | पू. अ. | रेणुः | पु. |
| मृतवत् | अ. | रक्तम् | न. | लक्षान्तरम् | न. |
| मृत्युः | पु. | रक्षकः | पु. | लग् | १ प. |
| मेखला | स्त्री. | रक्षणम् | न. | लगुडः | पु. |
| मेलकः | पु. | रक्षा | स्त्री. | लग्नवेला | स्त्री. |
| मैत्री | स्त्री. | रक्षितुम् | तु. | लज्जमान | वि. |
| मोक्षय् | १० उ. | रच् | १० उ. | लज्जित | भू. वि. |
| मोचय् | प्र. | रजकः | पु. | लड्डुकः | पु. |
| मोचयितुम् | तु. | रजतम् | न. | लब्ध | भू. वि. |
| मोदकः | पु. | रणम् | न. | लब्धुम् | तु. |
| मौक्तिकम् | न. | रत्नम् | न. | लभ् | १ आ. |
| यक्षः | पु. | रथः | पु. | लाभः | पु. |
| यज्ञः | पु. | रविः | पु. | लावण्यम् | न. |
| यतः | अ. | रसः | पु. | लिख् | ६ प. |
| यत्नः | पु. | रसज्ञ | वि. | लिखित | भू. वि. |
| यथा | अ. | राक्षसः | पु. | लुठ् | १ प. |
| यथाक्रमम् | अ. | राघवः | पु. | लुब्ध | भू. वि. |
| यद् | अ. | राजकुलम् | न. | लुब्धकः | पु. |
| यद् | स. | राजद्वारम् | न. | लेखः | पु. |
| यदा | अ. | राजपुरुषः | पु. | लेखनम् | न. |
| यदि | अ. | राज्यम् | न. | लोकः | पु. |
| याच् | १ आ. | रावः | पु. | लोचनम् | न. |

| | |
|---|---|
| लोपित | भू. वि. |
| लोहम् | न. |
| वचनम् | न. |
| वज्रम् | न. |
| वञ्चकः | पु. |
| वञ्चना | स्त्री. |
| वञ्चय् | प्र. |
| वञ्चित | भू. वि. |
| वटवृक्षः | पु. |
| वत्सः | पु. |
| वद् | १ प. |
| वदान्य | वि. |
| वध् | १ प. |
| वधः | पु. |
| वनम् | न. |
| वनचरः | पु. |
| वनस्थ | वि. |
| वनस्थली | स्त्री. |
| वन्द् | १ आ. |
| वह्निः | पु. |
| वयस्यः | पु. |
| वरः | पु. |
| वरम् | अ. |
| वराकः | पु. |
| वर्णः | पु. |
| वर्णमात्रः | पु. |
| वर्तमानकालः | पु. |
| वर्षणम् | न. |
| वर्षाकालः | पु. |
| वश | वि. |
| वस् | १ प. |
| वसन्तः | पु. |
| वस्तुतः | अ. |
| वस्त्रम् | न. |
| वह् | १ प. |
| वहनम् | न. |
| वा | अ. |
| वाक्यम् | न. |
| वाचय् | प्र. |
| वातः | पु |
| वातायनम् | न. |
| वानरः | पु. |
| वायसः | पु |
| वायसी | स्त्री. |
| वारः | पु. |
| वारित | भू. वि. |
| वारंवारम् | अ. |
| वार्ता | स्त्री. |
| वाहनम् | न. |
| विकरणः | पु. |
| विकॄ (किर्) | ६ प. |
| विक्रमः | पु. |
| विक्रान्त | वि. |
| विगत | भू. वि. |
| विगाह् | १ आ. |
| विग्रहः | पु. |
| विचक्षण | वि. |
| विचल् | १ प. |
| विचारः | पु. |
| विचार्य | पू. अ. |
| विजि (जय्) | १ आ. |
| विशस्त | भू. वि. |
| वित्तम् | न. |
| विद् | ४ आ. |
| विद् ( विन्द् ) | ६ प. |
| विदूषकः | पु. |
| विदेशः | पु. |
| विद्या | स्त्री. |
| विद्यालयम् | न. |
| विद्वेषः | पु. |
| विधवा | स्त्री. |
| विधूत्य | पू. अ. |
| विनयः | पु. |
| विना | अ. |
| विनाशः | पु. |
| विपरीत | वि. |
| विपर्ययः | पु. |
| विपुल | वि. |
| विप्रः | पु. |
| विप्रलब्ध | वि. |
| विभक्तिः | स्त्री. |
| विभा | २ प. |
| विमुग्ध | भू. वि. |
| विमृश् | ६ प. |
| वियुज्य | पू. अ. |
| विरहः | पु. |
| विरहित | वि. |

| | | | | | |
|---|---|---|---|---|---|
| विराज् | १ आ. | वृक्षः | पु. | ःः | पु. |
| विरुतम् | न. | वृत् ( वर्त् | १ आ. | नम् | न. |
| विरुद्ध | वि. | वृत्त | भू. वि. | म् | न. |
| विलप् | १ प. | वृत्तान्तः | पु. | नम् | न. |
| विलप्य | पू. अ. | वृथा | अ. | म् | न. |
| विलम्बः | पु. | वृद्ध | वि. | ः | पु. |
| विलापः | पु. | वेला | स्त्री. | कः | पु. |
| विलिख् | ६ प. | वेशः | पु. | म् | न. |
| विलिप्त | भू. वि. | वै | अ. | रः | पु. |
| विलोक्य | पू. अ. | वैरम् | न. | | १ प. |
| विवरम् | न. | वोढुम् | तु. | ा | स्त्री. |
| विवरणम् | न. | व्यथ् | १ आ. | | भू. वि. |
| विवादः | पु. | व्यवस्थाप्य | पू. अ. | | पु. |
| विवासः | पु. | व्यवहारः | पु. | | स्त्री. |
| विंश | वि. | व्यसनम् | न. | कः | पु. |
| विंशतिवर्षदेशीय | वि. | व्याघ्रः | पु. | म् | न. |
| विशाल | वि. | व्याघ्रता | स्त्री. | य् | प्र. |
| विशिष् | ७ प. | व्याधः | पु. | त | भू. वि. |
| विशिष्ट | भू. वि. | व्यापादय् | प्र. | | स्त्री. |
| विशेषणम् | न. | व्यापादित | भू. वि. | ः | पु. |
| विशेषज्ञ | वि. | व्रीहिः | पु. | म् | अ. |
| विषण्ण | वि. | शक् | ५ प. | म् | न. |
| विसद् ( षीद् ) | १ प. | शक्तिः | स्त्री. | ा | स्त्री. |
| विषादः | पु. | शक्र | पु. | | पु. |
| विस्तारः | पु. | शङ्का | स्त्री. | ( शोभ् ) | १ आ. |
| विहगः | पु. | शत्रुः | पु. | | वि. |
| विहस्य | पू. अ. | शत्रुविग्रहः | पु. | ा | स्त्री. |
| विहीन | भू. वि. | शपथः | पु. | | वि. |
| वृ ( वर् ) | १० उ. | शस्त | भू. वि. | | वि. |

| | |
|---|---|
| शूर | वि. |
| शृगालः | पु. |
| शेष | वि. |
| शैलः | पु. |
| शोकः | पु. |
| शोकाकुल | वि. |
| शोकार्त | वि. |
| शोभा | स्त्री. |
| श्राद्धम् | न. |
| श्रान्त | भू. वि. |
| श्रु | ५ प. |
| श्रुत | भू. वि. |
| श्रुतिः | स्त्री. |
| श्रुत्वा | पू. अ. |
| श्रेष्ठ | वि. |
| श्रोतुम् | तु. |
| श्रोत्रम् | न. |
| श्रोत्रियः | पु. |
| श्वः | अ. |
| षट्चत्वारिंश | वि. |
| षट्त्रिंश | वि. |
| षड्विंश | वि. |
| षष्ठ | वि. |
| षोडश | वि. |
| संयुत | भू. वि. |
| संवर्धय् | प्र. |
| संवर्धित | भू. वि. |
| संवादः | पु. |
| संवृत्त | भू. वि. |

| | |
|---|---|
| सकाशः | पु. |
| सकोपम् | अ. |
| सखी | स्त्री. |
| सख्यम् | न. |
| सङ्कटम् | न. |
| सङ्गीतम् | न. |
| सज्ज | भू. वि. |
| सञ्चर | १ प. |
| सञ्ज् [ सज् ] | १ प. |
| सञ्जात | भू. वि. |
| सत्त्वम् | नु. |
| सत्पुरुषः | पु. |
| सत्यम् | न. |
| सत्वरम् | अ. |
| सत्सप्तमी | स्त्री. |
| सदय | वि. |
| सदृश | वि. |
| सद्विद्या | स्त्री. |
| सन्ततिः | स्त्री. |
| सन्तोषः | पु. |
| सन्त्रासः | पु. |
| सन्दर्श्य | पू. अ. |
| सन्धिः | पु. |
| सन्ध्या | स्त्री. |
| सन्निधिः | पु. |
| सन्निहित | भू. वि. |
| सप्तचत्वारिंश | वि. |
| सप्तत्रिंश | वि. |
| सप्तदश | वि. |

| | |
|---|---|
| सप्तम | वि. |
| सप्तविंश | वि. |
| सभय | वि. |
| सभा | स्त्री. |
| सम | वि. |
| समकालम् | अ. |
| समक्षम् | अ. |
| समयः | पु. |
| समर्थ | वि. |
| समर्पित | भू. वि. |
| समागत्य | पू. वि. |
| समायात | भू. वि. |
| समालोच्य | पू. अ. |
| समासः | पु. |
| समाह्व | १ प. |
| समीपम् | न. |
| समुत्पन्न | भू. वि. |
| समुत्थाप्य | पू. अ. |
| समुद्रः | पु. |
| सम्पन्न | भू. वि. |
| सम्पुटः | पु. |
| सम्पूर्ण | वि. |
| सम्प्रति | अ. |
| सम्बोधनम् | न. |
| सम्भ्रमः | पु. |
| सम्मानय् | प्र. |
| सम्यक् | अ. |
| सरस्वती | स्त्री. |
| सर्पः | पु. |

| | |
|---|---|
| सर्व | स. |
| सर्वत्र | अ. |
| सर्वथा | अ. |
| सर्वनामन् | न. |
| सविस्मयम् | अ. |
| ससंशयम् | अ. |
| सस्मितम् | अ. |
| सस्यम् | न. |
| सह् | १ आ. |
| सह | अ. |
| सहर्षम् | अ. |
| सहस्रम् | न. |
| सहासम् | अ. |
| सागरः | पु. |
| साधनम् | न. |
| साधय् | प्र. |
| साधित | भू. वि. |
| साधु | अ. |
| साधुः | पु. |
| सानन्द | वि. |
| सायम् | अ. |
| सारमेयः | पु. |
| सार्धम् | अ. |
| साष्टाङ्गपातम् | अ. |
| सिध् | ४ प. |
| सिंहः | पु. |
| सु | वि. |
| सुखम् | न. |
| सुतः | पु. |
| सुप्त | भू. वि. |
| सुभाषितम् | न. |
| सुरः | पु. |
| सुलोचना | स्त्री. |
| सुवर्णम् | न. |
| सुवृत्त | वि. |
| सुष्ठु | अ. |
| सुस्थ | वि. |
| सूत्रम् | न. |
| सूर्यः | पु. |
| सेव् | १ आ. |
| सेवकः | पु. |
| सैनिकः | पु. |
| सैन्यम् | न. |
| सोढ | भू. वि. |
| सौम्य | वि. |
| स्कन्धः | पु. |
| स्था ( तिष्ठ् ) | १ प. |
| स्थानम् | न. |
| स्थापय् | प्र. |
| स्थापयित्वा | पू. अ. |
| स्थापित | भू. वि. |
| स्थित | भू. वि. |
| स्थित्वा | पू. अ. |
| स्नातुम् | तु. |
| स्नात्वा | पू. अ. |
| स्नानम् | न. |
| स्निग्धम् | अ. |
| स्नेहः | पु. |
| स्पर्धा | स्त्री. |
| स्पृह् | १० उ. |
| स्म | अ. |
| स्मशानम् | न. |
| स्मि ( स्मय् ) | १ आ. |
| स्मितपूर्व | वि. |
| स्वप् | २ प. |
| स्वप्नः | पु. |
| स्वभावः | पु. |
| स्वमतिभ्रमः | पु. |
| स्वयम् | अ. |
| स्वरः | पू. |
| स्वरूपाख्या | स्त्री. |
| स्वगतम् | न. |
| स्वाध्यायः | पु. |
| स्वाभाविक | वि. |
| हत | भू. वि. |

| | | | | | |
|---|---|---|---|---|---|
| हताश | वि. | हर्षः | पु. | हि | अ. |
| हत्वा | पू. अ. | हर्षित | वि. | हीन | भू. वि. |
| हन् | २ प. | | | हृ (हर्) | १ प. |
| हन्तुम् | तु. | हस्तः | पु. | हंसः | पु. |
| हरिः | पु. | हा | २ प. | ह्रीमती | स्त्री. |